# त्रि-पत्री

(मेघदूत [गीति-नाटिका]-मायापति-पुरोधसः स्वप्न
इति रूपक-त्रयसङ्ग्रहः)

प्रणेता :

**डॉ० शिवप्रसादो भारद्वाजः,**

शास्त्री, साहित्याचार्यः, एम० ए०, एम० ओ० एल्०,
पी-एच्० डी०, डी० लिट्०, साहित्यरत्नम्

प्रवाचकः (अवकाशप्राप्त)
पञ्चापविश्वविद्यालयीय-विश्वेश्वरानन्द-विश्वबन्धु-शोधसंस्थान,
होश्यारपुर ।

प्रकाशक :

**विनोदकुमार भारद्वाज**

प्राप्तिस्थान :

**भारद्वाज-निकेतन, हरिपुर काँवली, महादेव सिंह रोड,
काँवली, देहरादून**

प्रथम संस्करण १९८५ सर्वाधिकार स्वाधीन मूल्य १६ रु.

# प्रास्ताविकम्

नूतन-नाट्यशिल्पसज्जासज्जितं 'त्रिपत्री' संज्ञमिमं रूपक-सङ्ग्रहं काव्यालापलालितमनसां सुमनसां करकमलयोरुपन्यस्यन् अमन्दमानन्दस्यन्दं चुलुकीकरोमि । अत्र महाकविकीर्तिवधूलीलालास्योपदेशिनः कविकुलगुरोः कालिदासस्यामरकाव्यं मेघदूतं रूपकरूपेण परिणतं शृङ्गारतरङ्गिणीतरङ्गततिं प्रामुख्येण प्रवाहयति । ततश्च मायामयचरितविडम्बितलोकनेतृप्रतीकान्वर्थ-संज्ञमायापतिनायकं मायापतिसंज्ञमेकाङ्कं नाटकम् आत्मविषयोपजनित-कुत्साहास्यादिभावविभूतिभूषितं व्यङ्ग्यैरव्यङ्गं प्रस्तुतम् । अन्ते च 'पुरोधसः स्वप्नः' इत्यभिधानसूचितविवक्षितार्थवस्तु प्रहसनं न्यस्तम् इति रूपक-त्रयीं सङ्ग्रहोऽयं स्वतनौ बिभर्ति ।

यद्यपि मेघदूतस्य रूपकाकारेण प्रस्तवनं नाऽस्त्यपूर्वः प्रयत्नः रोमा-चतुर्धुरीणप्रभृतिभिर्नाट्यकला-प्रगल्भमतिभिः क्षुण्णचरत्वादस्य पथस्तथापि याथार्थ्यविदः सूक्ष्मेक्षिका-समीक्षितौत्तराधर्याः समीक्षकाः प्रभवेयुरेवास्य विशेषं निर्वर्णयितुमिति न मयाऽधिकं प्रलप्यते । स्व-कल्पना-विलासदुर्विदग्धेनाऽपि मयका न महाकवेर्मूलभावापलापोऽत्र क्वाऽपि विहितः । रूपके संवादतत्त्वस्या-ऽपरिहार्यत्वात् काव्ये च यक्षस्यैवानन्यपात्रत्वान्न तत् संभवतीति कुबेर-यक्ष-पत्नी-जलधर-सौदामन्योऽपि पात्रीकृताः । सर्वेऽपि संवादाश्च मन्दाक्रान्ताच्छन्द-सैवोपनिबद्धा इति गेयनाट्यमिदं शिल्पदृशा व्यपदेष्टुं शक्यते । रङ्गमञ्चे नभोवाण्याञ्च यथावसरं प्रयोक्तुमिदं रचितम् इति तादृशमस्य शिल्पम् अवलोक्य स्फुटीभवति । यत्र तत्र रङ्गसङ्केताश्च नूतननाट्यशिल्पप्रयोजिताः । विषयस्य प्रसङ्गस्य वानुगुण्यमनुरुध्य मूलपद्यानां क्रमः पाठश्चांशतः परिवर्तित इति क्वचिन्निरङ्कुशत्वमपि मयाचरितमिति सप्रश्रयमूरीकरोमि । काव्य-प्रभाव-संवृद्धये चैतदनुष्ठितमिति कूपखननन्यायेनास्य मलस्य विशुद्धिः सम्पत्स्यत इति दृढं विश्वसिमि । संयोजकतया स्व-निर्मित-पद्यानामपि समावेशेन सुतरां कलेवर-वृद्धिरस्य जाता, साऽपि न दोषाय स्यादिति मे मतिः ।

जालन्धरस्थनभोवाणीकेन्द्राद् द्विवारं त्रिवारं वा प्रसारितं मेघदूतस्येदं नवं रूपं सहृदयैः सुतरामभिनन्दितमिति प्रकाशनायास्य समुत्सुकोऽहमभवम् । प्रसारण-काले यक्ष-भूमिकायां श्रीकृष्णमुरारिशर्मणाऽऽबद्धं सङ्गीतं नात्र मुद्रिते सुलभं भविष्यतीति तच्छ्रोतुकामैर्मञ्चनायास्य समुद्योगः कार्य इत्येव मया वक्तुं शक्यते ।

'मायापति' नाम्नि रूपके च प्रस्तावना-भरतवाक्यसङ्ग्रहणेन, दृश्य-विभाजनेन, दूरभाषद्वाराऽऽकाशभाषितविधिपरिवर्तनेन च नव-प्राक्तन-नाट्यशिल्पयोः सम्मिश्रणं लक्ष्यत एव। सामाजिक्यः समस्याश्चानेका अत्र प्रस्तुताः।

'पुरोधसः स्वप्नः' इतिसंज्ञं प्रहसनं तु सर्वथा नवं काव्यशिल्प-माश्रयति। इदं न केवलं जनानां मनोरञ्जनाय अपितु समाजस्य कांश्चिद् विकृतान् पक्षान् प्रस्तोतुं प्रणीतम्। पुरोधस औदरिकता निकारश्च न तावत् पुरोहितस्यापवादायाऽत्र विषयीकृतौ। वस्तुत एकस्य विपन्नस्य पुरोहितस्य गृहे प्रायेण किम्प्रकारः कलहो दारिद्र्यमूलः सम्भवति येन नार्याः सहजो मधुरिमाऽपि दावदग्धः सहकार इव द्राक् प्लुष्यति; शासनस्य धर्म-निरपेक्षताया व्यावहारिकः पक्षः, संस्कृतं प्रति हीना भावना, पाश्चात्य-सभ्यता-प्रभावेण भारतीयनार्या विकृतिरिति च यत्र तत्र कटाक्षितम्। शिल्पदृशा सर्वथा नवां विधां वधविदं नाश्लीलता-दोषं स्पृशतीति विशेषः।

उभयमपि तत् होशियारपुरस्थपञ्चनदीयसंस्कृतपरिषदो वार्षिकोत्सवे प्रयुक्तचरम्। विश्वेश्वरानन्दविश्वबन्धु-संस्थानस्य वरिष्ठाधिकारिभिर्विश्वसंस्कृते रूपकत्रयमिदं प्रकाश्यानुगृहीतोऽहमिति सामारं स्वीकरोमि।

अन्ते च गुणदोष-परीक्षणाय विदग्धजनेषु प्रस्तुवन्निमं संग्रहं विरमति सुधा पल्लवितात्।

वैशाख-पूर्णिमा
४ मई, १९८५

विदुषाम् आश्रवः
शिवप्रसादो भारद्वाजः

# मेघ-दूतम्

[ गीति-नाटिका ]

पात्र-परिचयः

| | | |
|---|---|---|
| हेममाली | — | नायकः, यक्षः |
| कुबेरः | — | यक्षराट्, अलकाधिपतिः |
| मेघः | — | सन्देशहारकः |
| यक्षिणी | — | नायिका |
| विद्युत् | — | मेघपत्नी |

# मेघ-दूतम्

## [ गीति-नाटिका (Opera) ]

डॉ० शिवप्रसादः भारद्वाजः
अवकाशप्राप्त प्रवाचकः, वि० वि० ब० संस्थानम्, पंजाब-विश्वविद्यालयः,
साधु-आश्रमः, होश्यारपुरम् ।

### प्रथमं दृश्यम्

[ स्थानम् :—अलकापुर्यां यक्षस्य हेममालिनो भवनम् । समयः—उषःकालः । आकाशे खगरुतम् । कुक्कुटारावः । दूरे सवाद्यध्वनि प्राभातिकं सङ्गीतम् । शनैः शनैर्जवनिकोत्थानम् । एकतो हेममाली परतो लुलितालका मालिनी सतन्द्रमुद्रायां प्रविशतः । ]

**हेममाली**—[आकाशाभिमुखम् अभिवीक्ष्य] प्रिये मालिनि !

तारा लीना गगन-कुहरे वीत-यामा त्रियामा
प्राच्या वक्त्रे घुसृण-रचनां कल्पयत्यग्रसन्ध्या ।
अङ्कत्यागं तव न मनुते हन्त ! चेतो मदीयं
क्रोशत्युच्चैः शयन-विरहं निर्दिशंस्ताम्रचूडः ॥ १ ॥

**मालिनी**—[अक्षिणी मार्जयन्ती] प्रिय ! पश्य पश्य !

प्रातःसन्ध्या वियति शयने गन्धसाराङ्ग-रागा
प्रेयोवक्षः स्पृशति समदा भासमानं प्रभाभिः ।
सम्पश्यन्त्यो मिथुनमचिरं सङ्गतं विप्रयुक्तं
गायन्त्येता विहग-ललना नृत्यमग्नाः समोदम् ॥ २ ॥

**हेममाली**—[विकलस्वरेण]

गाढाश्लेषस्तव प्रियतमे नानुजानाति मोक्षं
मामाकर्षत्ययमपरतः स्वामिनो हा नियोगः ।
त्वद्-विश्लेषासहमयि ! मनः कोपतश्चाऽपि भीति-
भर्तुर्द्वन्द्वे महति पतितः किं त्वभाग्यः करोमि ? ॥ ३ ॥

**मालिनी**—[पत्युर्वक्ष आश्लिष्य]

मग्ना वक्षस्यहमतिरसाद् गाढबाहूपबन्धं
रात्रिं नीतां क्षणवदबुधाऽबोधिषं नैव दीर्घाम् ।
त्वद्-विश्लेषे दयित ! भविता किं न कल्पोपकल्पो
दीर्घोत्तापात् परमतपनो वासरो हा ! हताऽस्मि ॥ ४ ॥

**हेममाली**—[मालिनीमालिङ्गन्]

रागोद्रेकस्त्यजति न तवाश्लेषमेषोऽङ्गयष्ट्याः

[ नेपथ्ये शङ्खनादः ]

[ ससम्भ्रमम् ]

शङ्खोद्घोषस्त्वरयति तु मां राजप्रासादवर्ती
श्रावं श्रावं श्रवण-युगलं त्वद्-वचो नैव तृप्तं
तूर्णं यस्मिन् निपतति पुरा कर्कशः स्वामि-शापः ॥ ५ ॥

मालिनी—[रुदन्ती]

मा मा स्वामिन् ! परम-दहनं राज्ञ आमन्त्र्य रोषं
दोषं कृत्वा ननु मम कृते जातु कर्तव्य-मोषम् ।
कृत्वा सम्यङ् नृपति-भवने स्वं नियोगं तु सद्यः
प्रत्यायातः पद-युगमिदं रञ्जयेर्मन्मनश्च ॥ ६ ॥

हेममाली—[करेण तां परामृशन्]

कामं रुष्टो भवतु नृपतिर्नोत्सहे त्वां विहातुं
याऽऽनन्दस्य व्रजति कलिका त्वत्समीपे, क्व लभ्या ।
लक्ष्मीमत्ताः प्रभुपदभुजो नात्मसौख्य-प्रसक्ता
निःश्रीकाणां हृदय-निहिता भावनाः संविदन्ति ॥ ७ ॥

[ नेपथ्ये ]

आः कुत्रास्ते कनक-कमलाधीकृतो हेममाली !
भास्वान् प्राची-परिसरगतः, किं नु नोपस्थितोऽसौ ?
पूजाकालः किल पशुपतेर्देवदेवस्य याति
प्रत्यग्रो नो जलज-निचयस्त्वाहृतः, कः प्रमादः ? ॥ ८ ॥

[ उभौ ससम्भ्रमम् आकर्णयतः ]

मालिनी— हा हा ! जातं तदतिविषमं शङ्कितं यत् पुराऽभूत्
कोपाविष्टो ह्यवितथमसौ राजराजो मनस्वी ॥ ९ ॥

हेममाली—[सभयम्] किं कर्तव्यं परमिह ?

मालिनी— लघूपेत्य तं मानयाव ।

हेममाली—क्षाम्येन्नैवम् ?

मालिनी—... ... नहि नहि, महान् सुप्रसादः प्रकृत्या ।

[ पुनर्नेपथ्ये ]

नाऽऽहूतोऽपि त्वरितमयते हेममाली दुरात्मा
निर्वास्योऽसौ सपदि विषयात् स्वे नियोगे प्रमत्तः ।
आध्मातः स्याद् विभवभरितोऽस्मत्प्रसादाल्लघीयः
क्षोदीयान् यद् व्रजति लघुतामाशु लब्धाधिकारः ॥ १० ॥

हेममाली—[श्रवणमभिनीय सविषादम्]

हा ! वाग्दण्डो मयि सुविषमः पातितः स्वामिनाऽयं
यस्माद् भीत्या लशुनमशितं व्याधिराप्तः स एव ।
त्वद्-विश्लेषः परम-दहनो, मातृभूमेर्वियोग—
श्चैवं दग्धोऽस्म्यहमुभयथा, सर्वथा नाऽस्ति मोक्षः ॥ ११ ॥

मालिनी—[सावष्टम्भम्]

किं व्यामूढो भवसि दयितैवं त्वमापत्ति-काले
क्षिप्रं गत्वा सविनयमसौ राजराजोऽनुनेयः ।
कामं रुष्टः, प्रणतिवचनैर्नं प्रसीदेन्न देवो
नैकान्तेनो भवति महतां निग्रहोऽनुग्रहो वा ॥ १२ ॥

[ इत्युक्त्वा हेममालिनं हस्ते गृहीत्वा निष्क्रान्ता । ]

पट-परिवर्तनम्

## द्वितीयं दृश्यम्

[ स्थानः—कुबेर-भवनम् । कुबेरः क्रोध-मुद्रायां परिक्रामन् दृश्यते । हेममाली तत्पत्नी च सरभसं गत्वा तस्य पादयोः पततः । कुबेरो मुखं विनमय्य पश्यति । ]

हेममाली मालिनी च—[सानुनयम्] प्रसीदतु प्रसीदतु देवः ।

रोषेणाऽलं शिवसख ! कृपागार ! दासे स्वकीये
क्वाऽयं दीनो, दहनदहनः क्वाऽथ भीमोऽभिशापः ।
बालाः कामं प्रकृति-चपलाः कुर्वते चापलानि
क्रूरत्वं किं दधति पितरो वत्सला जातु तेषु ? ॥ १ ॥

कुबेरः—[पादावाक्षिप्य साधिक्षेपम्]

लक्ष्मीमत्तो नहि परहृदो भावना वेत्तु कामं
त्वं निःश्रीको भवसि किमु रे ! वर्धितोऽस्मत्प्रसादैः ।
नो बालिश्यादपि तु मदनेनाभितप्तोऽथ दृप्तः
कृत्वोपेक्षां कथमिव कृपा-मर्षणं याचसेऽद्य ? ॥ २ ॥

यक्षिणी—[सविनयम्]

मन्दानां किं भवति भगवँल्लक्षणं, ते प्रगल्भा
जायन्ते यत् प्रभु-पदकृपालेशमप्याप्तवन्तः ।

कुबेरः—[उग्रस्वरेण]

तस्मात्तेषां विनयन-कृते दण्ड एवौषधं स्यात्
हृत्वा सद्यो मदविषमयं दर्शयेत् साधु मार्गम् ॥ ३ ॥

हेममाली—[मन्दस्वरेण]

मन्ये स्वामिन् ! मदकृतमिमं स्वापराधं महान्तम्
दण्ड्यश्चाहं तदपि करुणां दर्शयाऽस्मिन् विनीते ।
निर्वास्योऽहं यदि तु विषयात् कां दशां याति बाला
मद्देवीयं क्व च मृदुतनुर्नीयते वा प्रवासे ? ॥ ४ ॥

कुबेरः—[मृदुस्वरेण]

क्षान्तं, कामं न खलु गणये चाऽहमात्मन्यवज्ञां
हेला क्षम्या भवति न परं देवदेवे महेशे ।
कामार्तस्त्वं न यदगणयस्तात कामारिपूजां
दण्डस्तस्माद् वृजिनहरणो मर्षणीयः कथं स्यात् ? ॥ ५ ॥

यक्षिणी—[सदैन्यम्] पत्न्या भर्ता परमिह गतिः सा कथं तं विना स्यात् ?

कुबेरः—त्वं स्वाऽऽवासे वस गतभया पुत्रिकेऽस्यां नगर्याम् ।

यक्षिणी—बालैकाऽहं कथमिव वसाम्यत्र ?

कुबेरः—कस्मान्नु भीता ?

यक्षिणी—यूनां वृत्तेर् !

कुबेरः—अलमयि भयेनाऽस्म्यहं जागरूकः ॥ ६ ॥

अपि च—

वर्षं यावत् क्षमयितुमुभौ हेलितं काम-शत्रुं
स्वे स्वे स्थाने विविधबलिभिः सन्नतावर्चयेतम् ।
प्रायश्चित्तक्षपितकलुषौ तत्परं देवदेवः
प्रीतो भूयः प्रचरतु युवां सङ्गतौ साधिकारौ ॥ ७ ॥

[ इत्युक्त्वाऽन्तर्धत्ते । हेममाली मालिनी च शनैरुत्तिष्ठतः । ]

यक्षिणी—दिष्ट्या वर्षावधिरविषमो विप्रवासः कृतोऽयम् ।

यक्षः—दिष्ट्या भर्त्रा सुतनु ! विहिता स्थातुमत्रैव गेहे ।

आपृच्छे त्वाम्—

यक्षिणी—व्रज दयित ! मां विस्मरेर्नैव,

यक्षः—कुर्याश्—

चेतो दूनं न मयि विगते, त्वं प्रकृत्याऽसि तन्वी ॥ ८ ॥

यक्षिणी—[सदैन्यम्]

चेतो दूनं न किमु भविता वल्लभ ! त्वत्परायाः
सङ्कल्पानामपि न सुगमं प्रोषिते जीवितेशे ? ।
ध्यायन्तीं त्वां व्रत-परिणतौ सङ्गमस्याऽऽशया मां
प्राणानेतान् कथमपि पुनर्लप्स्यसे धारयन्तीम् ॥ ९ ॥

[ उभौ पृथक् पृथग् दिशि निष्क्रामतः । पट-परिवर्तनम् ]

## तृतीयं दृश्यम्

[ स्थानं—रामगिरेः शिखरम् । परितः पादप-राजिः, पल्लव-विनता लताः, विविध-पुष्पाणां छटा, यत्र तत्र पक्षिणां कूजितम् । जल-प्रपातानां ध्वनिः, एकः शिलाखण्डः सन्निहितो दृश्यते । ]

[ नेपथ्ये ]

कश्चित् कान्ता-विरह-गुरुणा स्वाधिकारात् प्रमत्तः
शापेनाऽस्तंगमित-महिमा वर्षभोग्येण भर्तुः ।
यक्षश्चक्रे जनक-तनया-स्नान-पुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥

[ ततः प्रविशति विप्रवासदशायां वर्तमानो हेममाली । मुक्त-कुन्तलं शिरः, स्कन्धे करयोर्लम्बमानम् उत्तरीयम्, अधस्ताद् बद्धपरिकरं धौत-वस्त्रम्, पादयोः पादुके । आगत्य सचिन्तः परिक्रामति ]

हेममाली—[दीर्घं निःश्वस्य] हा दैव !

यस्या नाल्पं विरहमसहे हन्त ! पूर्वं स्व-भर्तुः
सेवाकार्येऽगुरुणि गिरिशाऽऽराधनाङ्गेऽभियुक्तः ।
दूरं तस्या नयन-मनसोरप्यगम्ये प्रदेशे
मासानष्टावनयमहकं विश्वसेत् को नु विज्ञः ? ॥ २ ॥

किं नु खल्वितः परं दौर्भाग्यं यदीदृशे प्रदेशे प्रियया वियुक्त एकाकी विचरामि । दयितानुरागाक्षिप्तहृदयः शम्भोराराधनेऽपि न समाधिस्थो भवितुं प्रभवामि । (परितो विलोक्य) ।

एताः श्यामाः व्रतितततयः पादपाः पल्लवाढ्या
(घ्राणमभिनीय) आमोदोऽयं मदयतितमां वातनीतः सुमानाम् ।
(परिक्रामन्) क्षौमस्पर्शं मरकतनिभं शाद्वलं तल्पकल्पं
(दृष्टिं निवर्त्य सक्षोभम्) तापायैतन् मम तु निखिलं कान्तया विप्रयोगे ॥३॥

[ क्षणं विरम्य चिन्तयति ]

कालो नेयः कथमयमहो ! पूजया किं स्मरारेः ?
चेतस्तुन्नं स्मरशरशतैरेति न ध्यान-योगम् ।
गल्पाकल्पो ? विजन-विपिने केन जल्पान्यनन्यः
क्रीडान्याहो ? कथमिव ? तनुं हन्त ! तस्या लिखामि ॥ ४ ॥

[इतस्ततो मनःशिलादिधातुरागशलाका विचित्य] इदं मसृणं शिलाखण्डमेव चित्रफलकं सम्पत्स्यते। [निषद्य शिलाखण्डे चित्रलेखनमभिनयति। सहसाऽश्रूणि प्रमार्जयन्नुत्तिष्ठति।] दुष्करमेतत्। हा वल्लभे!

त्वामालिख्य प्रणय-कुपितां धातुरागैः शिलाया-
मात्मानं ते चरण-पतितं यावदिच्छामि कर्तुम्।
अस्त्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥ ५॥

अत्राऽपि विफल-मनोरथः कथमधुना वर्ते? (किञ्चिद् ध्यात्वा) भवतु। रमणीयेऽत्र प्रदेशे प्रियाङ्गप्रतिनिभेषु वस्तुषु दृष्टिं निक्षिप्य मनो विनोदयामि। [इतस्ततो दृष्टिं निक्षिप्य सवितर्कम्]

श्यामा म्लाना जडित-गति तन्नेत्र-युग्मं मृगीणाम्
अङ्कोद्विग्नस्तुहिनकिरणः पृष्ठगो बर्हभारः।
निर्व्यापारा इव तु सरितां विभ्रमा वीचिजाले
किं स्यादन्यद् यदिह भजते कान्ति-लेशं प्रियायाः॥ ६॥

कल्पितेऽपि वा साम्यलेशे यत्र तत्र नहि कुत्रापि एकत्र साकल्येन साम्यम्। [सकरुणम्] हा प्रिये! कुत्र नु खलु त्वां पश्यानि?

श्यामास्वङ्गं चकितहरिणी-प्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान्।
उत्पश्यामि प्रतनुषु नदी-वीचिषु भ्रूविलासान्
हन्तैकस्मिन् क्वचिदपि न ते चण्डि! सादृश्यमस्ति॥ ७॥

[सहसा नेपथ्ये केकारवः] अये! किमेते जलद-सुहृदो रुवन्ति? न खलु प्रावृट्कालः सन्निहितः? [गगनाभिमुखम् अभिवीक्ष्य] हन्त! सत्यमेव घन-दर्शनम्। [अङ्गुल्या गणनमभिनीय] आषाढस्याऽयमारम्भः। श्रावणमासश्च पुरोनिहितः। [किमपि चिन्तयन् शनैः शनैः] ततः प्रौष्ठपदः ... ... ... ततः कन्यार्कः। [सोच्छ्वासं हर्षमाविष्कुर्वन्] तुलां सङ्क्रान्ते च रवौ नियतो मे शापान्तः। [आम्रेडयन्] एतावान् मे विप्रवास-कालः। एतावान् मे विप्रवास-कालः। [सहसा विषीदन्] परं कथं नाम दुर्विषहोऽयं घनकालो नेयः?

[ नेपथ्ये ]

तस्य स्थित्वा कथमपि पुरः कौतुकाधान-हेतो-
रन्तर्वाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेष-प्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ८ ॥

हेममाली—कामं यातो भवति बहुलो विप्रवासस्य काल-
श्चेतोऽधीरं स्मरति तु यदा श्रावणं सन्निकर्षे ।
बाला पूर्वं सुतनुरसहा विप्रयोगस्य, चिन्तां
मत्क्षेमस्याऽथ च सुविषमां कुर्वती किं नु जीवेत् ? ॥ ९ ॥

[सचिन्तम्] तत् किं करोमि मन्दभाग्यः ?

रक्ष्याः प्राणा अधृति-विचला वल्लभायाः कथं स्यु-
र्वार्तप्रैषो न खलु सुकरः को नु गच्छेत् सुदूरम् ।

[ स्मृत्वा ]

विद्युन्माली वियति रमते हेममाली तथाऽहं
दूनं जानन् किमु विकलतां मेऽर्थितं नैष कुर्यात् ? ॥ १० ॥

[ससम्भ्रमम्] अर्घ्यं तावदस्योपहरामि । परं ... नाऽस्ति किमपि सन्निहितम् अर्घ्यमुपकल्पयितुम् । [इतस्ततो दृष्ट्वा] हन्त ! इमानि तावत् प्रत्यग्रविकसितानि कुटज-कुसुमानि । एभिरेव सपर्यामस्य सम्पादयामि । [कुटजकुसुमावचयम् अभिनीय मेघाभिमुखं स्थित्वा] भगवन् ! मेघ !

जातं वंशे भुवन-विदिते पुष्करावर्तकानां
जानामि त्वां प्रकृति-पुरुषं कामरूपं मघोनः ।
तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ११ ॥

कथं, नाऽसौ प्रतिवचनं यच्छति ? अथवा भूयो निवेदयिष्यामि ।

[ पुनरञ्जलिं बद्ध्वा गगनाभिमुखः ]

सन्तप्तानां त्वमसि शरणं तत् पयोद ! प्रियायाः
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ १२ ॥

[ मेघ-स्तनितं श्रुत्वा सहर्षम् ]

हन्त ! प्रतिपन्नं मे वचः । सखे ! नाहमेकः, अन्येऽपि त्वयोपकृता भविष्यन्ति ।

तथा हि—

त्वामारूढं पवन-पदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः।
कः सन्नद्धे विरह-विधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥ १३ ॥

[ नेपथ्ये स्तनितान्ते ]

यक्षाध्यक्षानुचर ! भवतः प्रार्थनाऽऽकर्णितेयं
संशप्तश्चेत् त्वमसि प्रभुणा नाऽसि मे नानुकम्प्यः।
अध्वा दीर्घो भविक-शकुनं किञ्च कालोऽनुकूलः
चिन्त्यं सर्वम् ... ... ... ...... ... ... ......

हेममाली— शुभद-शकुनं लक्ष्यमाणं वदामि ॥ १४ ॥

यथा हि—मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां

[ नेपथ्ये समीर-सरण-शब्दः ]

वामश्चायं नदति मधुरं चातकस्ते सगन्धः।

[ चातकानां कूजितं श्रूयते ]

गर्भाधानक्षण-परिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयन-सुभगं खे भवन्तं बलाकाः ॥ १५ ॥

[ बकानां रुतम् ]

मेघः — अस्त्येवैतत्, भवति नितरां शासनं बाधकं भोः
शास्त्राणां यत् प्रवसतु जनो नैकलः क्वाऽपि जातु।
तस्मात् सार्थं विमृश कमपि प्रीति-विस्रम्भपात्रं
नैकाकी सन् श्रम-परवशो भद्र ! येनोद्विजेय ॥ १६ ॥

हेममाली— किमुच्यते, सार्थं इति ? ननु विद्युत्सहायेनैव भवता गन्तव्यम्।
[किञ्चिद् विरम्य हसन्] अथवा सार्थवाह एव भूत्वा व्रजेः। कुतः—

कर्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तच्छ्रुत्वा ते श्रवण-सुभगं गर्जितं मानसोत्काः।
आ कैलासाद् बिस-किसलयच्छेद-पाथेयवन्तः
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ १७ ॥

मेघः — साधुः सार्थोऽवितथमुदितं राजहंसैरमीभिः
प्रस्थातव्यं नियतमचिराच्छुच्यपाये पुरस्तात्।
किं विस्रब्धस्त्वमसि वनिता जीविता लप्स्यते सा
नाऽहं यातोऽप्यविरतगतिः स्यां यथा मोघयत्नः ॥ १८ ॥

किञ्च —

त्वय्यायाते तु विषयमिमं किन्नु तस्या नगर्या-
स्तिष्ठेत् कान्ताऽस्खलितनियमा त्वत्प्रतीक्षाव्यपेक्षा ?
प्राय: स्त्रीणां भवति दयिते सम्मुखस्थे दृढं यत्
कामार्तानां गलति विरहे त्वञ्जसा तद्धि धैर्यम् ॥ १९ ॥

हेममाली—भद्र ! विस्रम्भेणैव वदामि । पश्य —

ताञ्चावश्यं दिवस-गणना-तत्परामेकपत्नी-
मव्यापन्नामविहतगतिर्द्रक्ष्यसे भ्रातृजायाम् ।
आशाबन्ध: कुसुम-सदृशं प्रायशो ह्यङ्गनानां
सद्य:पाति प्रणयि-हृदयं विप्रयोगे रुणद्धि ॥ २० ॥

मेघ: — [सगर्जितहर्षम्] किमुक्तं भ्रातृजायामिति ? अहो ! योजितस्त्वया तया सम्बन्ध: । अधुना —

आश्वास्यस्त्वं भवसि न परं भ्रातृजायाऽपि दृश्या
स्नेहार्द्रा चेद् भवति मयि सा देवरेऽत्यातुराऽपि ।
नैक: पन्था ननु नियमतो वारिदानामतस्त्वं
मार्गं ब्रूया लघुमथ सुगं लक्ष्य-सिद्धिर्यथा स्यात् ॥ २२ ॥

हेममाली—अलं शङ्कया । दक्षिणायास्तस्या: प्रतिपत्ति: साधीयस्येव नियता किं पुनर्देवरे !

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद ! श्रोष्यसि श्रोत्रपेयम् ।
खिन्न: खिन्न: शिखरिषु पदं न्यस्य गन्ताऽसि यत्र
क्षीण: क्षीण: परिलघु पय: स्रोतसां चोपभुज्य ॥ २३ ॥

मेघ:— दीर्घे मार्गे त्वरित-गतिना च श्रमो नानुभाव्यो
न स्यात् तस्मात् सुखद-वसतिर्विश्रमायानुपेक्ष्या ।
भोज्यं पेयं भवतु सुखदं क्लान्तिहारी विनोद:
क्षिप्रं यस्यां दिश तदधुना या तु दिक् प्राक्-प्रपद्या ॥ २४ ॥

हेममाली—[विहस्य] रसिकोऽसि सखे ! विनोदस्थानं यदपेक्षसे । अस्ति तस्यापि संविधानम् । तथाहि—

अद्रे: शृङ्गं हरति पवन: किं स्विदित्युन्मुखीभि-
र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभि: ।
स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुख: खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् ॥ २५ ॥

अन्यच्च—

त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधू-लोचनैः पीयमानः ।
सद्यः सीरोत्कषणसुरभि क्षेत्रमादाय मालं
किञ्चित् पश्चाद् व्रज लघुगतिर्भूय एवोत्तरेण ॥ २६ ॥

मेघः—[सलघुगर्जितम्] हुम्, मालक्षेत्रम् ! तत्तु दूरे वर्तते ।
विश्रान्तव्यं क्व नु वद मया प्रस्थितेनोत्तरस्यां
न स्यात् तुङ्गं शिखरि-शिखरं तत्र भो ज्ञात-पूर्वम् ।

हेममाली—कथम् एतद् भविष्यति ? ननु भोः,
त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः । ।२७ ॥

मेघः—आम्, आयातः स्मृतिपथमसावाम्रकूटः, कदाचिन्
नावस्थानं मम स सहते विस्मरन् लोकरीत्या ।

हेममाली—अलं शङ्कया । तथाहि—
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः, किं पुनर्यस्तथोच्चैः ॥ २८ ॥

मेघः—अस्तु, ततः ?

हेममाली—स्थित्वा तस्मिन् वनचर-वधू-भुक्त-कुञ्जे मुहूर्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपल-विषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ २९ ॥

मेघः—[किञ्चित्स्मरन्निव] किम् किम् ? रेवाम् ? ओ ! नर्मदा खलु सा ।

हेममाली—कथं न नर्मदां स्मरिष्यसि ?
तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।
अन्तःसारं घन ! तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ ३० ॥

तत्र च तव मार्ग-दर्शका अपि बाहुल्येन सुलभाः । तथा हि—
नीपं दृष्ट्वा (दष्ट्वा) हरितकपिशं केसरैरर्धरूढै-
राविर्भूतप्रथममुकुला: कन्दलीश्चानुकच्छम् ।
जग्ध्वाऽरण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥ ३१ ॥

मेघः—न खलु तस्यामेव दिशि दशार्णाः ?

हेममाली—साधु स्मृतम्। [साकूतम्] लाभायैव तत्र तव गमनं सम्पत्स्यते।

कुतः—

तेषां दिक्षु प्रथितविदिशा-लक्षणां राजधानीं
गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यस्मात्
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ ३२ ॥

मेघः—[हसन्] सत्यमुक्तम्—

पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम्।
आस्तां तावत्, न खलु निकटे धाम भो ईश्वरस्य ?

हेममाली—प्रत्यासन्नं ननु भुवि महाकाल इत्याख्यया तत् ॥ ३३ ॥

तस्मात्—

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैः पयोभिः ॥ ३४ ॥

मेघः—[पुलकित इव]

गन्तव्यं तद् वृजिन-हरणं धाम, कस्तस्य पन्थाः ?

हेममाली—पूर्वं गच्छेरनुज ! सविधेऽवन्तिरत्नं विशालाम् ॥ ३५ ॥

मेघः—[विचिन्त्य] किं विशालाम् ? सा तु न मार्गे पतति ?

हेममाली—किं तेन ?

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ ३६ ॥

न केवलमेतत्। स्वयमुपकृतोऽपि भविष्यसि। तथा हि—

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथा
लक्ष्मीं पश्यँल्ललित-वनिता-पाद-रागाङ्कितेषु ॥ ३७ ॥

मेघः—भवतु। ग्रामं गच्छन् तृणमपि स्प्रक्ष्यामि। नाऽत्र दोषः। गन्तव्यस्तु
मम महाकाल एव।

हेममाली—नो पर्याप्तं भवति गमनं, देव-सेवाऽपि कृत्यं
मेघः— निष्पाद्या सा कथमपि मया चेद् यथाकाल-साध्या ॥ ३८ ॥
हेममाली—किं तेन ?

अप्यन्यस्मिन् जलधर ! महाकालमासाद्य काले
स्थातव्यं ते नयन-विषयं यावदत्येति भानुः ।
कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥ ३९ ॥

[ नेपथ्ये शङ्खघण्टादि-ध्वनिः ]

मेघः—[सगर्जितम्]

साधूक्तं भो उपकरणतां चेत्सपर्यासु शम्भोः
प्राप्तोऽहं स्यां, वद किमपरं तत्र कार्यं मया स्यात् ॥ ४० ॥

हेममाली—पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
साग्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या: ॥ ४१ ॥

मेघः—भो मित्र ! नियतमेवं फलिता मम यात्रा स्यात् ।
हेममाली—कः सन्देहः । तथाहि —

तां कस्याञ्चिद् भवन-वलभौ सुप्त-पारावतायां
नीत्वा रात्रिं चिर-विलसनात् खिन्न-विद्युत्कलत्रः ।
दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ४२ ॥

मेघः—अलं शङ्कया । अभ्युपपन्नं तु साधनीयमेव भवति । परं मार्गादन्यस्यां दिशि सा नगरी । तत् कथं मया पुनरुद्दिष्टः पन्थाः प्रतिपत्तव्यः ?
हेममाली—एष वदामि । ततः पथि पतितां गम्भीरां नदीं सम्भाव्य परस्तात्—

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः
स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।

[ सुषिरे वातपूरणध्वनिः ]

नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥ ४३ ॥

मेघः – किमुक्तं देवगिरिरिति ? स तु विश्रमस्थानमपि भविष्यति ।
हेममाली—न केवलं विश्रमस्थानम् । पुरुषार्थसिद्धिरपि तत्र नियता ।
मेघः—कथम् ?

हेममाली—पश्य तावत्—

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः ॥ ४४ ॥

न केवलं स्कन्द आराधनीयः, विनोदस्थानम् अपि तत्र।

मेघः—कथमिव ?

हेममाली—ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रीत्या कुवलयदलप्रापि कर्णे करोति।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ४५ ॥

[ नेपथ्ये गर्जितध्वनिः ]

मेघः—[हसन्निव] साधु दृष्टम्। अवश्यं नर्तयिष्यामि। ततः ?

हेममाली—आराध्यैवं शरवणभवं देवमुल्लंघिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद् वीणिभिर्मुक्तमार्गः।

[ नेपथ्ये वीणा-शब्दः ]

व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥ ४६ ॥

मेघः—[सवितर्कम्] किम् रन्तिदेवस्य कीर्तिम् ? न खलु चर्मण्वतीं व्यपदिशसि ?

हेममाली—आम्, तामेव व्यपदिशामि। [स्मयमानः] जानासि मित्र ! कीदृशं तव रूपं तदा भविष्यतीति ?

मेघः—[सकौतुकम्] न खल्ववगच्छामि।

हेममाली—शृणु तावत् —

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम्।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४७ ॥

मेघः—[हसन्] हा ! हा ! हा ! हा ! साधु दृष्टम्। परं किं तेन सिध्यति ?

हेममाली—[सस्मितम्] यत् सिध्यति तदेव वदामि।

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरि विलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ॥ ४८ ॥

मेघः— [हसन्] पात्रीभूतो दशपुरवधूनेत्रकौतूहलाना-
मीर्ष्यां स्वस्मिन् न खलु तडितः सद्य आमन्त्रयिष्ये ? ।

हेममाली—
नैवं शङ्क्यं रसिक ! नियतं दक्षिणा वल्लभा ते,
मोदेतेत्थम्,

मेघः— भवतु, परतो ब्रूहि भो मार्गशेषम् ॥ ४९ ॥

हेममाली— ब्रह्मावर्तं जनपदमथ च्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद् भजेथाः ।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारासारैस्त्वमिव कमलान्यभ्यवर्षन् मुखानि ॥ ५० ॥

मेघः— किं कुरुक्षेत्रम् ? यत्र सरस्वती प्रवहति ?

हेममाली—आम्. तदेव ।
हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ।
कृत्वा तासामभिगममपां सौम्य ! सारस्वतीना-
मन्तःशुद्धस्त्वमसि भविता वर्णमात्रेण कृष्णः ॥ ५१ ॥

मेघः— पीत्वा सारस्वतमयि ! रसं सत्यमाप्यायितः स्यां

हेममाली—पातुं सज्जो भव मधु पयो यामुनं पावनञ्च ।

मेघः— [सकौतुकम्] तत् कथम् ?

हेममाली—इन्द्रप्रस्थं व्रजसि यदि भोः प्राङ्मुखो राजधानीं
पाण्डूनां तत्परिसरगतां लप्स्यसे सूर्य-पुत्रीम् ॥ ५२ ॥

मेघः— पीतं सारस्वतमतिरसं यामुनेयं तथाम्भो

हेममाली—गाङ्गं शिष्टं तदपि निकटे ;

मेघः— कुत्र तत् ?

हेममाली— प्रब्रवीमि ॥ ५३ ॥

तस्माद् गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५४ ॥

[ नेपथ्ये हर हर ध्वनिः ]

मेघः—ननु हिमाचलोऽपि संनिहित एव ।

हेममाली—अथ किम् । विश्रमस्थलम् एव स भवतः । कुतः—

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रम-विनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्र-त्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५५ ॥

मेघः— [सातङ्कम्]

तस्मिन् वायौ सरति सरलस्कन्धसंघट्टजन्मा
बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः ।

हेममाली—[साकूतम्]

अर्हस्येनं शमयितुमलं वारिधारासहस्रै—
रापन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ ५६ ॥

मेघः—तत्र व्यक्तं दृषदि.........

हेममाली— चरणन्यासमर्द्धेन्दुमौलेः

शश्वत् सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः ।

[ नेपथ्ये स्तुति-घोषः ]

मेघः— यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
सङ्कल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५७ ॥

उभौ— शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः

[ नेपथ्ये वेणुशब्दः ]

संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।

[ नारीकण्ठ-गीतस्वरः ]

हेममाली— निर्ह्रादस्ते मुरज इव चेत् कन्दरासु ध्वनिः स्यात्

[ मेघ-गर्जितं मृदङ्ग-शब्दश्च ]

सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ५८ ॥

मेघः— कैलासोऽस्माद् भवति निकटे —

हेममाली— श्रूयतामेतदेव ।

मेघः— प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्
हंसद्वारं भृगुपति-यशोवर्त्म यत् क्रौञ्चरन्ध्रम् ॥ ५९ ॥

हेममाली—तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ॥ ६० ॥

मेघः— शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ६१ ॥

हेममाली—हित्वा तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत् पादचारेण गौरी ।
भङ्गी-भक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥ ६२ ॥

मेघः—[त्रस्त इव]
तत्र क्रीडन्त्यमरललनाश्चञ्चला दृप्तकामाः

हेममाली—[सस्मितम्] त्रस्तः किं भो रसिक ?।

मेघः— चटुलास्ता न भो नर्मसाध्याः ॥ ६३ ॥

हेममाली—[हसन्] अलं भयेन ।
तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
[ नेपथ्ये कङ्कण-क्वणितम् ]
नेष्यन्ति त्वां सुर-युवतयो यन्त्रधारा-गृहत्वम् ।
[ नेपथ्ये स्त्रीणां किलकिला-शब्दः ]
ताभ्यो मोक्षस्तव यदि सखे ! घर्मलब्धस्य न स्यात्
क्रीडालोलाः श्रवण-परुषैर्गर्जितैर्भाययेस्ताः ॥ ६४ ॥
[ नेपथ्ये-मेघ-स्तनितं स्त्रीणां सहासं पलायन-शब्दश्च ]
क्षणं शान्तिः

हेममाली—[स्थिरस्वरेण]
तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ।
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६५ ॥

मेघः— [श्रान्त इव]
नाभिज्ञाता न खलु नगरी सा तथोच्चैर्विमाना
प्रायो दृष्टा, जगति विदिता कामिनां या विलासैः ।
श्रान्तस्तावत् त्वमपि कथया किं न दीर्घाध्वनोऽस्य ?

हेममाली—क्लान्तश्चेद् भोः, क्षणमिह सखे ! विश्रमानन्दमेहि ॥ ६६ ॥

[ समाप्तं तृतीयं दृश्यम् ]

# चतुर्थं दृश्यम्

[ ततः प्रविशतः पूर्ववद्-वेषो हेममाली मेघश्च ]

हेममाली—विश्रान्तः किं जलधर ! यथा वर्णये मातृभूमिं
यस्यां जातोऽविदितशमलं लालितः पालितश्च ।
क्लेशार्तोऽहं विरहिततया वल्लभायाः प्रकामं
स्मृत्या तस्या द्विगुण-कलिलो विप्रवासो ममायम् ॥ १ ॥

मेघः— धन्योऽसि त्वं भवसि विकलः संस्मरन् जन्मभूमिं
सन्तप्तः सन् विरहदहनेनाऽपि भो वल्लभायाः ।
कामं भोगान् सुरपुरसमानश्नुवानो विदेशे
नो सम्मानं भजति मनुजो यस्तु लभ्यः स्वदेशे ॥ २ ॥

हेममाली—तेनौत्सुक्यं मम जनिभुवो वर्णने, काममेषा
नानादिक्षु भ्रमण-रतिना दृष्टपूर्वा त्वया स्यात् ।
गायं गायं गुणशतमहं विप्रवासेऽपि यस्या
अङ्के सुप्तं स्वमिव कलये प्रायशो भाव-मुग्धः ॥ ३ ॥

मेघः— दृष्टा कामं भवतु मयका, वर्णने नाऽस्ति दोषः
संस्मृत्या चेत् सखिवर ! सुखं गच्छसि क्लिष्ट एवम् ।
सख्युः सौख्यं सुखयति ममाऽप्यन्तरङ्गं श्रुता सा
कुर्यात् कौतूहलमथ भवेद् भूयसा नूतनैव ॥ ४ ॥

हेममाली—साधु सखे ! जानासि मित्रानुवर्तनम् । तर्हि शृणु तावत्—
विद्युद्वन्तं ललित-वनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ ५ ॥

मेघः— [प्रसन्नः सन् परावर्त्याऽऽम्रेडयति] सत्यमेव —
प्रासादा मां तुलयितुमलं तत्र तैस्तैर्विशेषैः ।

सर्वर्तुसम्पदपि तस्या असाधारणी—
हस्ते लीलाकमलमलके बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरबकं चारु कर्णे शिरीषं
सीमन्ते वा मदुपगमजं यत्र नीपं वधूनाम् ॥ ६ ॥

हेममाली—[साकूतं हसन्] सत्यमेव स्मारयन्ति त्वां तस्या आत्मचेष्टितानि ।

तथाहि —

नेत्रा नीताः सततगतिना तद्विमानाग्रभूमी-
रालेख्यानां नवजलकणैर्दोषमुत्पाद्य सद्यः ।
शङ्का-स्पृष्टा इव जलमुचस्त्वादृशा जालमार्गै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ७ ॥

मेघः—कथं विस्मरिष्यामि विलासिनां विलासभूमिं तां पुरीम् ।
गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥ ८ ॥

हेममाली—नाऽसूयाऽस्यां भवतु भवतः कामिनां चेष्टितैस्तै-

मेघः— दोंषाञ्जानन् विभव-विहितान् नाभ्यसूये सखेऽहम् ।
विस्तीर्णा सा भवति नगरी, कुत्र कोणे त्वदीयः
स्यादावासो वद च विशदं लक्षणैर्यैर्विचेयः ॥ ९ ॥

हेममाली—तत्रागारं धनपतिगृहानुत्तरेणाऽस्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योपान्ते कृतकतनयः कान्तया वर्द्धितो मे
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः ॥ १० ॥

मेघः—अन्यत् किञ्चित् ?

हेममाली—आम्, अस्ति पुष्कलम् । श्रूयताम्—
वापी चाऽस्मिन् मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
नाध्यस्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥ ११ ॥

किञ्च —

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्-गेहिन्याः प्रिय इति सखे ! चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥ १२ ॥

[ विद्युत्स्फूर्जितम् ]

मेघः— सामान्यं तद् भवति नगरे तत्र सम्पत्समृद्धे
क्रीडाशैला विटपिबहुला निष्कुटा दीर्घिकाश्च ।

नातिव्याप्तं सुविशदमये ! लक्षणं ब्रूहि तन्मे
दूराज् ज्ञेयं भवतु भवनं येन मित्राशु तत्र ॥ १३ ॥

हेममाली—एभिः साधो हृदयनिहितै-र्लक्षणैर्लक्षयेथा
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ १४ ॥

मेघः— हन्तैतत्स्यात् स्फुटमविकलं लक्षणं वेश्मतस्ते
सम्बाधेऽस्मिन् पृथुनि नगरे लक्षयेल्लक्षणीयम् ।
अन्तर्वेशः कथमपि परं संभवेदस्मदीय—
स्तस्मिन् कक्षाप्रथिमनि गृहे शङ्कटद्वारलङ्घ्ये ॥ १५ ॥

हेममाली—अलं चिन्तया । एष ब्रवीमि —
गत्वा सद्यः कलभतनुतां शीघ्र-सम्पात-हेतोः
क्रीडाशैले प्रथमकथिते रम्य-सानौ निषण्णः ।
अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ १६ ॥

मेघः— साधूक्तं भोः शिखरिशिखरात् प्रेक्षणीयं गृहान्त-
र्वृत्तं स्थित्वा बहिरपि सुखेनैव चागन्तुकेन ।
नारीभूमन्यपि तु भवने लक्षणीया कथं स्या-
दार्या तस्मिन्, भवति विदितो दृष्टपूर्वो भवेद् यः ॥ १७ ॥

हेममाली—तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद् युवति-विषये सृष्टिराद्येव धातुः ॥ १८ ॥

मेघः—[आत्मगतम्] कौतूहलं खलु जनितम् अनेन कीर्तनेन । भवतु ।
[प्रकाशम्] किं तया ?

हेममाली—[तन्मय इव ध्यानस्थो भूत्वा गद्गदस्वरेण]
तां जानीथाः परिमितकथां
[ वक्षसि दक्षिणं करं विन्यस्य ]
जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वाऽन्यरूपाम् ॥ १९ ॥

मेघः—हुम् ! [तर्कयन्निव] तां जानीथाः प···रि···मि···त···क···थाम्···
[पुनः किमपि स्मृत्वा] ।

स्याद्विज्ञाता यदि तु भवने लक्षितैः कामिनी सा
तर्कापेक्षो भवति विषयश्चेद्विकल्पो महीयान् ।
अन्या काचिद् वरतनुरमुत्रागता बोधनार्थं
तस्या, नूनं परम-विषमे सङ्कटेऽहं पतेयम् ॥ २० ॥

हेममाली—अलं शङ्कया। ननु स्फुटविप्रयोगचिह्नैरभिज्ञेया सा। पश्य तावत् —

आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः ।
नीता रात्रिः क्षण इव मया सार्धमिच्छारतैर्या
तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥ २१ ॥

इतः परं च किं प्रोषितभर्तृकाया लक्षणं भविष्यति ? तथा हि—

सा संन्यस्ताभरणमबला पेशलं धारयन्ती
शय्योत्सङ्गे नियतमसकृद् दुःखदुःखेन गात्रम् ।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणा-वृत्तिरार्द्रान्तरात्मा ॥ २२ ॥

मेघः—[सहासम्] हा ! हा ! हा ! हा !

मत्वाऽऽत्मानं सुभगमखिलस्तर्कयत्येव लोकः
स्त्रीणां स्वस्मिन् प्रणयमचलं रागदोषादनन्यम् ।
विस्रम्भोऽयं न परमुचितस्तासु भो यौवनान्धा
रूपाऽऽसक्ता मदन-मथिताः कामयन्तेऽन्यमाशु ॥ २३ ॥

हेममाली—[व्यथित इव] मा मैवं विचिन्त्य । कुतः—

जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मा-
दित्थम्भूतां प्रथम-विरहे तामहं तर्कयामि ।
वाचालं मां न खलु सुभगंमन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद् भ्रातरुक्तं मया यत् ॥ २४ ॥

मेघः—[विस्मित इव शिरो घूर्णयन्] हु···म् । यद्येवं तर्हि मन्ये, धन्योऽसि ।
परम्—

त्वय्येवं चेद् भवति सततं बद्धरागा प्रिया सा
वर्षप्रायं गमयतु कथं कालमेवं शुचाऽऽर्ता ।
कालः स्वल्पोऽप्ययि विरहिणां जायते कृच्छ्रनेयः
स्यादेतावान् युगशतसमः कामिनीनां विशेषात् ॥ २५ ॥

हेममाली – ब्रूषे सत्यं सखिवर ! परं जायते कृच्छ्रनेयः
कालस्तेषां विकलमतयो निष्क्रिया ये नराः स्युः ।
कृत्यं भूयो भवति तु गृहावेक्षणे गेहिनीनां
तन्निष्पत्त्या व्रजति समयोऽज्ञात एवोद्धुराणाम् ।। २६ ।।

पुनर्विनोदशतैरपि कृच्छ्रे कालो याप्यत एव । यथा हि—

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भाव-गम्यं लिखन्ती ।
पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां
कच्चिद् भर्तुः स्मरसि रसिके ! त्वं हि तस्य प्रियेति ।। २७ ।।

[ छायादृश्येन मालिनी तथाव्यापारा दृश्यते ]

मेघः—ननु वीणा-रसिकाऽपि सा स्यादेव ?

हेममाली—अथ किम् ?

उत्सङ्गे वा मलिन-वसने सौम्य ! निक्षिप्य वीणां
मद्-गोत्राङ्कं विरचित-पदं गेयमुद्गातुकामा ।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चिद्
भूयो भूयः स्वयमपि कृतां मूर्छनां विस्मरन्ती ।। २७ ।।

[ नेपथ्ये मन्दो वीणा-स्वनः श्रूयते ]

मेघः—साधुरयं मनोविनोदनोपायः ।

हेममाली—आम् । अतएव—

सव्यापारामहनि न तथा पीडयेन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ।
मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनि-शयनां सौध-वातायनस्थः ।।

मेघः—अस्तु, रात्रावेव तां द्रक्ष्यामि । परम् ... ...

हेममाली—[मध्ये आक्षिप्य]

तस्मिन् काले जलद ! यदि सा लब्ध-निद्रासुखा स्या-
दन्वास्यैनां स्तनित-विमुखो याम-मात्रं सहस्व ।
मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्
सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ।। २९ ।।

मेघः— कामं सैवं भवति सुखिता स्वप्नसन्दृष्टकान्ता
क्वावस्थानं पवन-रथगस्याऽस्ति मे याममात्रम् ।
दृष्ट्वा रात्रावविदितचरं शङ्कते मां पुमांसं
कच्चिद् बालाऽपरिचितजने यौवतं संशयालु ।। ३० ।।

हेममाली—अस्त्येवं भोः परमतिघने न स्थले त्वद्-रथः स्यात्
संसर्पिष्णुः शिखरगमतो जालकं संश्रयेथाः ।

मेघः— कामं कुर्यामिदमथ कथं बोध्यते सा शयाना
दृष्ट्वैकान्ते नरमविदितं चापि मां त्रासमेयात् ॥ ३१ ॥

हेममाली—नागरोऽसि सखे ! किमेवं शङ्कसे ? नाऽस्ति स्त्रीसहायस्य स्त्री-दर्शने दोषः । अतः—

तामुत्थाप्य स्व-जल-कणिका-शीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।
विद्युद्गर्भः स्तिमित-नयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरः स्तनित-वचनैर्मानिनीं प्रक्रमेथाः ॥ ३२ ॥

मेघः— किमिति ?

हेममाली—भर्तुर्मित्रं प्रियमविधवे ! विद्धि मामम्बुवाहं
तत्सन्देशैर्हृदय-निहितैरागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ ३३ ॥

मेघः—नियतं विस्रम्भजनकोऽयमारम्भः ।

हेममाली—तत एव ब्रवीमि । अथ च—

इत्याख्याते पवन-तनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैवम् ।
श्रोष्यत्यस्मात् परमवहिता सौम्य !

मेघः—नियतम्—

सीमन्तिनीनाम्,
कान्तोदन्तः सुहृदुपनतः सङ्गमात् किञ्चिदूनः ॥ ३४ ॥

अधुना सन्दिश यत् सन्देष्टव्यम् ।

हेममाली—तामायुष्मन् ! मम च वचनादात्मनश्चोपकर्तुं
ब्रूया एवं तव सहचरो रामगिर्याश्रमस्थः ।
अव्यापन्नः कुशलमबले ! पृच्छति त्वां वियुक्तः

मेघः— पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥ ३५ ॥

हेममाली—मम दशा तावत् तव सख्यै निवेदनीया येन स्थिरसौहृदं मां मन्यते ।

मेघः—कथमिव ?

हेममाली—श्रूयताम्—

मामाकाश-प्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्न-सन्दर्शनेषु ।
पश्यन्तीनां न खलु बहुशो न स्थली-देवतानां
मुक्ता-स्थूलास्तरु-किसलयेष्वश्रुलेशाः पतन्ति ॥ ३६ ॥

मेघः—भो न खलु एवम् उन्मत्तं त्वां मन्यते ।

हेममाली—तथा मन्यते चेत् सिद्धं मे समीहितम् । अन्यदपि वक्तव्यं शृणु —

संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्-वियोग-व्यथाभिः ॥ ३७ ॥

मेघः— एवं श्रुत्वा तव विकलतां सा वियोगातुरापि
स्याद् भूयोऽपि प्रगुणशमला धीरतां सन्त्यजन्ती ।
तस्मात्तस्या धृतिकरमपि ब्रूहि किञ्चित्तथा तद्-
विस्रम्भार्थं मयि निजरहोवृत्तमज्ञातमन्यैः ॥ ३८ ॥

हेममाली—साधु स्मारितं भद्र ! । ननु दर्शितं त्वया दौत्यविशारदत्वम् ।
श्रूयतां यद् वक्तव्यम् ।

मेघः—अवहितोऽस्मि ।

हेममाली—नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत्कल्याणि ! त्वमपि सुतरां मा गमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ३९ ॥

मेघः—अथाभिज्ञानम् ?

मभाली—[किञ्चिद् ध्यात्वा सलज्ज इव] इदं रहस्यमपि न सख्युरनाख्येयम् ।
ब्रूहि तावत् —

भूयश्चाऽपि त्वमसि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वनं विप्रबुद्धा ।
सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे
दृष्टः स्वप्ने कितव ! रमयन् कामपि त्वं मयेति ॥ ४० ॥

मेघः—नियतं रहस्यं विस्रम्भजननम् ।

हेममाली—कच्चित् सौम्य ! व्यवसितमिदं बन्धुकृत्यं त्वया मे ?
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ ४१ ॥

मेघः—भोः ! प्रतिपन्नमेव मया पूर्वं नाऽसि मे नानुकम्प्य इति वदता ।
अधुना साधयाम्यहम् ।

हेममाली—[प्रसन्नः] साधु सखे ! साधु । साधय समीहितसाधनाय ।

एतत्कृत्वा प्रियमनुचितप्रार्थनावर्तिनो मे
सौहार्दाद् वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।
इष्टान् देशान् जलद ! विचर प्रावृषा सम्भृतश्री-
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ ४२ ॥

मेघः—भवतु । गृहीतम् आशीर्वचनम् । सुखमास्यतां भवताऽपि ।

[ उभौ निष्क्रान्तौ ]

जवनिका-पतनम्

## पञ्चमं दृश्यम्

[ स्थानम्—अलकापुरी । पूर्व-वर्णितं सङ्गीतादि श्रूयते ।
ततः प्रविशति विद्युता सह मेघः ]

मेघः— प्राप्तौ नावां किमु प्रियतमे ! राजधानीं कुबेर-
स्येयं क्रोडे ननु हरगिरेर्भाति भास्वद्विमाना ।

विद्युत्— गङ्गा चेयं परिसरगता लक्ष्यते प्रस्खलन्ती
मध्ये स्थूलोपलशतमथोद्गीर्णफेनाच्छहासा ॥ १ ॥

मेघः—नियतं सैवेयमलकापुरी —

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्री-सहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
मद्-गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ २ ॥

[ नेपथ्ये मृदङ्गध्वनिः श्रूयते । ]

विद्युत्—[परितो दृष्टिं निक्षिपन्ती] ।

आस्ते तत्र प्रियतम ! महासौधमभ्रंलिहाग्रं
दूराद् भ्राजत्कलशमपि तद् राजराजस्य हर्म्यम् ? ।

मेघः—[वीक्षमाणः]

सम्यग् ज्ञातम्, सुरपतिधनुश्चारु तत्तोरणं भो
आवासोऽसौ भवति नियतं गुह्यकेनोक्तपूर्वः ॥ ३ ॥

विद्युत्—कान्त ! सम्यगुपलक्षितं भवता। तत्र चाऽसौ क्रीडाशैलः। अस्यैव विषये गदितं तेन—

रक्ताशोकश्चलकिसलयः केसरश्चाऽत्र कान्तः
प्रत्यासन्नौ कुरबकवृतेर्माधवी-मण्डपस्य।
एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदन-मदिरां दोहदच्छद्मनाऽस्याः॥ ४॥

मेघः—[सस्नेहं तामभिवीक्ष्य] ननु श्रान्तामिव भवतीं पश्यामि। तद् आगम्यताम्। तत्रैव विश्राम्याव।

विद्युत्—[तं स्कन्धेऽवलम्ब्य] तथा कुरु।

[ उभौ परिक्रामतः ]

मेघः—इदं तद् भवनम्। [दृष्टिं निक्षिप्य] नूनं सा यक्षपत्नी। सुव्यक्तानि तस्या प्रोषितभर्तृकालक्षणानि। तथाहि—

निःश्वासेनाधरकिसलयक्लेशिना विक्षिपन्ती
शुद्धस्नानात् परुषमलकं नूनमागण्डलम्बम्।
तत्सम्भोगः कथमुपनमेत् स्वप्नजोऽपीति निद्रा-
माकाङ्क्षन्ती नयन-सलिलोत्पीडरुद्धावकाशा॥ ५॥

[ भूमिशयना यक्षिणी दृश्यते। ]

विद्युत्—[निपुणं निर्वर्णयन्ती स्तब्धा तिष्ठति]।

मेघः—[तां तथाभूतां निरीक्ष्य] किं पश्यसि प्रिये।

विद्युत्—[तस्यामेव निहित-दृष्टिः] अहो ! निपुणता विधातुः सौन्दर्यातिशय-निर्माणे। यथार्थमाह स तपस्वी —

[ 'तन्वी श्यामा' इत्यादि श्लोकं पुनः पठति ] ॥ ६॥

मेघः—[निपुणं निर्वर्ण्य] सत्यमाह भवती। प्रत्यादेश इव तत्र भवती रूपवतीनाम्। अथवा अनिर्वर्णनीयं परकलत्रम्। भ्रातृजायेति कृत्वा तस्यां मम पक्षपातः। अहो ! शोचनीयता तपस्विन्याः।

आद्ये बद्धा विरह-दिवसे या शिखा दाम हित्वा
शापस्यान्ते विगलितशुचा तां तदुद्वेष्टनीयाम्।
स्पर्शक्लिष्टामयमितनखेनासकृत् सारयन्ती
गण्डाभोगात् कठिनविषमामेकवेणीं करेण॥ ७॥

विद्युत्—[सस्पृहं निरीक्ष्य] दयित ! पश्य पश्य !

रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्।
त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या
मीनक्षोभाच्चलकुवलयश्रीतुलां चुम्बतीति॥ ८॥

मेघः—साधूपलक्षितं भवत्या । नियतं सा जागर्तीदानीम् । अतः सन्दिष्टं व्याहरामि । [विचिन्त्य] कथं नामैताम् आमन्त्रयाणि । [स्मृत्वा] भवतु । गुह्यकेनोक्तमेव साधु सम्बोधनम् । [भर्तुर्मित्रम् इत्यादि पठति] ॥ ९ ॥

यक्षिणी—[वातायनाभिमुखं दृष्टिं निक्षिप्य] ।

कोऽयं रात्रौ वदति पुरुषो ? दृश्यते स्त्रीसहायः
ब्रूते च स्वं प्रियतम-सख तस्य सन्देशहारम् ।

मेघः— प्राप्तोऽहं त्वद्-दयित-वचनाद् देवरो भ्रातृजाये !

यक्षिणी— भद्रोपेतः कथमसि ! सुखी मत्प्रियः कच्चिदस्ति ? ॥ १० ॥

मेघः— आम् ! कुशली खलु तत्रभवान् केवलं भवत्याः क्षेमविषये चिन्तितः । पश्य विधेर्वैषम्यम् —

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।
सोऽतिक्रान्तः श्रवण-विषयं लोचनाभ्यामदृश्य-
स्त्वामुत्कण्ठा-विरचितपदं मन्मुखेनेदमाह ॥ ११ ॥

यक्षिणी—[सोत्कण्ठा] धन्याऽहं या कुशलिनो दयितस्य वार्ताहरं पश्यामि । [शयनात् किञ्चिदुत्थाय] भद्र ! भूयो भूयो ब्रूहि, किमाह मम प्रियतमः ?

मेघः— अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥ १२ ॥

यक्षिणी—[सास्रम्] न खलु कान्त ! तवैवेयं दशा । पश्य —

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना त्वद्वियोगे
सङ्कल्पैस्त्वं रहमशरणा त्वत्सुयोगं विशामि ॥ १३ ॥

मेघः—भवति ! अलम् आवेगेन । शृणु तावदवहिता परतः—

भित्त्वा सद्यः किसलयपुटान् देवदारुद्रुमाणां
ये तत्क्षीर-स्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति ! मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ १४ ॥

यक्षिणी— दिष्टचा कान्त त्वममि विदितः संश्रितो दक्षिणाशां
येनोदीच्या अनुभवसि भो वातमेनं समीरम्।
नायं लाभो मम तु विषमं भागधेयं गताया
जाने नाऽहं भवसि विषये कुत्र दृश्यः कथं वा ॥ १५ ॥

मेघः— दृश्यः शीघ्रं भवति दयितो भ्रातृजाये! भवत्या

यक्षिणी—[सकरुणम्]

सौभाग्यं मे जलधर! कुतस्तादृशं दुर्भगायाः।

मेघः— मैवं बाले! विगणय सती त्वं, तवैव प्रभावात्
कान्तस्तेऽसौ भजति कुशलं, द्रक्ष्यति त्वां शरत्सु ॥ १६ ॥

यक्षिणी—[सोच्छ्वासं] कथं, शरत्सु मां द्रक्ष्यति सः।

मेघः—आम्, सन्दिष्टं हि तेन—

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान्मासान् गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ १७ ॥

यक्षिणी—[आनन्देनोच्छ्वसन्ती]

दिष्टचाऽद्यैषा श्रवणविषये दुर्वियोगान्तगाथा
दिष्टचा दृष्टो दयितप्रहितो देवरो वार्तहारी।

मेघः— दिष्टचा दृष्टाऽसि च कुशलिनी लोचनाभ्यां त्वमार्ये!
साभिज्ञानं प्रतिदिश निजं चारु सन्देशमस्मै ॥ १८ ॥

यक्षिणी— सन्देशं मे जलधर! वदेः प्राणिमि त्वप्रतीक्षा-
लीना, मा मत्कुशलविकलो भूयसीं क्लान्तिमेहि।
क्षिप्रं कृत्वा व्रत-परिणतिं तोषयित्वाऽम्बिकेशं
प्रत्यावृत्तो दयित! चरणौ रञ्जयेमौ सरागः ॥ १९ ॥

मेघः— आर्ये! दृष्टा त्वमसि गमनायानुजानीहि मां, यद्
गत्वा कान्तं तव सपदि तं सान्त्वयामि प्रवृत्त्या।

यक्षिणी— [करौ प्रलम्बौ कृत्वा]

आयुष्मान् स्या, भज पथि शिवं सङ्गतः कान्तयैवं
काले काले सुखय सुखितश्चात्मसन्दर्शनेन ॥ २० ॥

मेघः—प्रतिगृहीतम् आशीर्वचनम्। साधयामि तावत्।

[ इत्युक्त्वा विद्युत्सहितः परिक्रामति ]

करुण-सङ्गीतेन सह पटाक्षेपः।



# मायापतिः

डा. शिवप्रसादो भारद्वाजः

## निवेदनम्

युगस्य परिवर्तनेन सह जनरुचयोऽपि भिद्यन्ते, प्राकृतिकोऽयं नियमः। साहित्ये च जनजीवनं प्रतिफलतीति यादृशः समाजो यादृशी चाभिरुचिर्लोकस्य तादृशमेव काव्यं प्रतीक्ष्यं भवति। पुराऽपि समाजस्य कुत्सितपक्षाणां निरावरणाय भाण-प्रहसनमुखा रूपकविधाः प्रचलिता आसन्निति तावदाकरग्रन्थेभ्योऽवसीयते। अद्य च दम्भप्राये लोकजीवने समाज-प्रमुखाणां जीवनं गजदशनवद् दर्शनमात्र-सुभगं सर्वतोऽवलोक्यते। कालिदास-भवभूतिप्रभृतीनां कविधुरन्धराणां विख्याताः कृतीर्वर्जयित्वाऽन्यासु साम्प्रतिको जनो यदि न रसमनुभवति तत्र तदीयावबोध-स्तरस्य निम्नतैव मूलं यद्वशेन न स साधारणीकरणाय कल्पते। सामाजिकीः समस्याः लोकजीवनस्य कुत्सितपक्षांश्चाश्रित्य यथार्थं प्रस्तुवन्ति रूपकाणि प्रायः सर्वेभ्यो रोचन्त इति कृत्वा लघुरूपकमिदमेकाङ्कं मायापतिसंज्ञं वर्षेऽस्मिन्नायो-जयिष्यमाणस्य पञ्चनदीयसंस्कृतपरिषदस्तृतीयवार्षिकाधिवेशनस्यावसरे प्रयोगाय प्रणीतम् अभूत्। अत्र ककुद्मकल्पस्य यथार्थनाम्नो मायापतिसंज्ञस्य कल्पित-पात्रस्यापातमनोहरं दम्भमयं चरितं प्रस्तुतम्। कुमारी माया चाऽस्य नायिका-ऽभिनयसौकर्यम् अक्षिलक्ष्यीकृत्य न प्रत्यक्षं रङ्गमञ्चमानीता। केवलं पुरुष-पात्राणि सुलभान्यभिनयाय भविष्यन्तीति कृत्वा निहितानि। इदं च स्थानीय-सनातनधर्मसंस्कृतमहाविद्यालयस्य च्छात्रैश्च तदा प्रस्तुतम् उपस्थितसमाजेन च साध्वभिनन्दितम् इति प्रोत्साहितेन मयाऽधिकं प्रसारं लभतामिदम् इति कृत्वा प्रकाशनायोपन्यस्यते। आत्मना तु सर्वोऽपि कविराजो भवति, स्निग्धाश्च सज्जना आत्मीयस्य गुणलवपरमाणून् गिरीकूटोपमान् प्रख्यापयन्तीति उभये न प्रमाणम्। अतो यथार्थविदां गुणगृह्याणां च करकमलेषु परीक्षणाय प्रस्तुवन्निमां कृतिं विरमति मुधापल्लवनात्।

विदुषाम् आश्रवः
शिवप्रसादो भारद्वाजः

## पात्र-परिचयः

### पुरुष-पात्राणि

मायापतिः—एकः सामाजिको नेता, रूपकस्य च नायकः ।

सत्यप्रकाशः—एकः पण्यजीवी समाजसेवकश्च, उपनायकः ।

रामाधीनः—पत्रालयकर्मचारी, नायिकायाः पिता ।

बिहारिलालः—सार्वजनिकनिर्माणविभागस्य कर्मकरः ।

राजदीनः—मायापतेर्गृहदासः ।

रामनारायणः—सार्वजनिक निर्माणविभागस्य प्रमुखयान्त्रिकः ।

अन्ये पुरीश (Police) विभागस्याधिकारिणः ।

### स्त्री-पात्रम्

कुमारी माया—रूपकस्य नायिका (अप्रत्यक्ष पात्री)

## प्रथमं दृश्यम्

(स्थानम्—मायापतेः सद्मनः कक्षः)

(नेपथ्ये)

निःशेषे भुवने प्रपूर्य जठरं शेते य आत्मम्भरि-
र्येनाऽहो वशिनाऽपि विश्वरतिनाका नाऽऽत्मदाराः कृताः ।
नित्यं स्वं महिमानमेव तनुते भूत्वाऽपि मायामयो
भद्रं सोऽयमहं तनोमि भवतां नित्यं स मायापतिः ।।

(जवनिकोत्थानेन सह पुरुषः प्रविशति नेतृवेषेण ।)

पुरुषः (साट्टहासम्)—हः हः हः, हः हः हः ! कीदृशं मधुरं नाम मायापतिः । (आर्द्रस्वरेण स्वैरम्) मा······या······प······तिः । सत्यम्, बहूनां मायानां पतिर् अहम् । दानं, मानं, छलनं हरणं, प्रलोभनं, चाटुकारिता, भर्त्सनम् । किं नाम न जानामि । शम्बरावपि अधिको मायावी अहम् । मायानां प्रभावेण किं न मया लब्धम् ? भूमिः, धनम्, प्रतिष्ठा, वाहनम्, सर्वं मयि स्थितम् । शासने मम प्रभावः, अधिकारिणो मम करतलगताः । विधान-सभाया अहं सदस्यः । कर्मचारिसंघानां नेता । अनाथालयानां विधवाश्रमाणां च प्रधानम् । गोसदनानां प्रबन्धकः । शिक्षासंस्थानां संरक्षकः । महिलासमितीनां विश्वासभाजनम् । युवसेनाया अध्यक्षः । (विचिन्त्य) अस्ति किलैतत् । परं कीदृशोऽहं मायापतिः यावत्·········(अक्षिणी भ्रामयन् करेण च संकेतयन्) सा······ जीवन्ती माया न लभ्यते । अहो ! तस्या असामान्यं रूपम् । पुरतः समागता कर्पूरशलाकेव नयने शिशिरयति । विद्युन्मयीव दृष्टा चाकचक्यं दृशोस्तनोति । विभ्रमैः भ्रमयतीव मतिम् । चिन्तिता सहसा पुरस्तिष्ठति, समागता चेन्द्रजालरमणीव सहसा तिरोभवति ।

न केवलं नाम्ना, गुणैरपि सा मायैव मूर्तिमती विष्णोः। स्निग्धया दृष्ट्या रागमिव मयि सूचयति। निकटे स्थिता च स्पर्शमपिच्छायया परिहरति। (सवितर्कम्) परं किं मया तां विना नाम्नैव मायापतिना स्थातव्यम्? परिणयेन सा सुतरां सुलभेति संभावये। एव तावन् मत्तोऽपि वरीयांसं वरं लप्स्यते तस्याः पिता। (स्मृत्वा) परं स तु दरिद्रः। कस्याऽपि धनिकस्य सुता परिणीयते चेत् पुष्कलं धनं लभ्यते। (सदैन्यम्) किन्तु सा···माया···तु नैव भविष्यति। (विचार्य) अत्रानुराग आकांक्षति किमपि बलिदानम्। प्रणयस्य पुरस्तात् कीदृशी लालसा वित्तस्य। (सतिरस्कारम्) अहह, विडम्बनामात्रम् अनुरागः। शरीरसुखादतिरिक्तः को नाम स्त्रीपुंसोः प्रेमग्रन्थिः। परिणयश्च केवलमात्मनो बन्धननिक्षेपः। अतः स्वच्छन्दत एव भोग्या रमण्यः। (स्मृत्वा) सा खलु भृत्ययाऽर्थिनी। तस्या मृगतृष्णिकया नियतं मम कर-गता भविष्यति। (पुनरुच्चैर्विहस्य) मायापतिः खल्वहम्। काचिन्मायैव तस्या अवाप्तये आश्रयणीया।

(सहसा प्रविशन्)

अन्यः पुरुषः—(सस्मितम्) हं हो, अद्य न जाने मायापतेर्माया कां हरिणीं प्रलोभयितुमिच्छति।

मायापतिः—(विलोक्य ससाध्वसं स्वगतम्) आः कुतोऽयं महिषीपुत्रः! न खलु श्रुतमनेन मम चिकीर्षितम्। (प्रकाशं स्मयमानः) हन्त! सत्यप्रकाशः! सखे, स्वागतम्। कथम् अकाण्डेऽद्यापतनम्। (हस्ते ग्रहणाय प्रत्युद्गच्छति। सत्यप्रकाश उपसृत्य करे गृह्णाति। उभौ आसन्द्याम् उपविशतः)

सत्यप्रकाशः—सत्यम् एवाकाण्डे समागमनम्। अन्यथा प्रभुषु, नेतृषु स्त्रीषु च अवसरेणैव उपसर्पणं भवति।

मायापतिः—(उच्चैर्विहस्य) परं कस्यां कोटौ अयं मायापतिः पातितः। नाऽयं प्रभुः, नाऽपि च नेता······।

सत्यप्रकाशः—(मध्ये आक्षिप्य) नाऽपि च स्त्री···इत्यपि वक्तव्यम्।

मायापतिः—(उच्चैर्हसन्) हा हा हा···किम् अस्ति तत्रापि सन्देहः?

सत्य०—भवति परं न तत्र ।

माया०—तर्हि कुत्र ?

सत्य०—यद् भवता पूर्वमुक्तम् ।

माया०—(साकूतम्) कथं नाम ।

सत्य०—भोः किमत्र प्रष्टव्यम् । इदं खलु नेतॄणां युगम् । त एव राष्ट्रस्य कर्तारः रक्षितारः संहर्तारश्च । तथाहि—

नेता वदेद् यदि, जनः सकलः स्वदेश—
रक्षाकृते न किमु जीवनमर्पयेन्न ?
तस्यैव वाचमनुसृत्य विनाशलीलां
विष्वक् समाचरति सैव, भवांश्च नेता ॥

माया०—भवतु तावत् । अद्य चिरात् कथम् आगमनम् ? अस्ति किमपि करणीयम् ?

सत्य०—कथयामि तावत् । अद्य नगरोद्याने प्रगतिशीलसमाजेन यौतुकविरोधिनी सभाऽऽयोक्ष्यते, सर्वेषां भवांस्तस्या अध्यक्षत्वेनाऽभिमतः । एतदेवावेदयितुम् आगतोऽहम् ।

माया०—किं यौतुकविरोधिनी सभा ? (क्षुब्ध इव तिष्ठति ।)

सत्य०—अथ किम् ?

माया०—(सहसाऽऽसनाद् उत्तिष्ठन्) किम् एतया सिध्यति ?

सत्य०—(सविस्मयं तस्य मुखे दृष्टिं निक्षिप्य स्वयमपि उत्तिष्ठन्) किं भवान् यौतुकं समर्थयते ?

माया०—(सावहित्थं तं करे गृहीत्वा) अलम् अन्यथा विशङ्क्य । ममाशयः यथा लोकाः प्रत्यक्षं यौतुकं निन्दन्ति स्वैरं च साग्रहं कामयन्ते । अतो दम्भमात्रम् एतादृशं सभानाम् आयोजनम् ।



सत्य०—यथार्थदर्शी भवान्, परं नहि सर्वेऽपि [illegible] ।

ये शुचयस्तैर्दम्भिनां भर्त्सना करणीयैव भवति, सर्वेषां समक्षं कृता च सा प्रभविष्णुः सम्पद्यते ।

माया०—(विवश इव किमपि चिन्तयन् परिक्रामति । पुनः स्थित्वा) भाषणं कर्तुं कस्तावदामन्त्रितः ?

सत्य०—सन्त्यनेके वक्तारः ? कुमारी माया तेषाम् अन्यतमा ।

माया०—(श्रुत्वा पुनर्निवृत्तम् उत्साहं हर्षं च काठिन्येन निगूहयन्) किमुक्तम्, कुमारी माया ? साऽपि तस्य समाजस्य सदस्या ?

सत्य०—किमत्र चित्रं यदि सुमतिः सुपथमनुवर्तते ।

माया०—(क्षणं स्थित्वा) कस्मिन् काले सभया भवितव्यम् ?

सत्य०—कालः नाद्यापि निश्चितः, निर्धारिते दूरभाषेण सूचयिष्यामि ।

माया०—(प्रकोष्ठलग्नं घटीयन्त्रं पश्यन्) मयाऽन्यत्रापि गन्तव्यं भवति ।

सत्य०—कदा ?

माया०—अपराह्णे ।

सत्य०—एतद् दृष्टिगतं कृत्वैव समयनिर्धारणं करिष्यते । (जिगमिषति)

माया०—भवान् संमन्त्र्य क्षिप्रमेव सभासमयं सूचयतु ।

सत्य०—तथा, धन्यवादाः । (द्वाराभिमुखं परिक्रामति)

माया०—धन्यवादाः । (किञ्चिद् अनुसृत्य निवृत्तः) कृतं कृष्णमुखम् अनेन । अहो विडम्बना ! अहं तावत् पुष्कलं यौतुकं कामयमानः अद्यापि अपरिणीतस्तिष्ठामि । अयं महिषीपुत्रस्तु मां यौतुकविरोधिन्याः सभायाः अध्यक्षतां कर्तुम् आमन्त्रयते, तत्र गतेन मयापि यौतुकदानस्य स्वीकारस्य च विरोध एव विधेयः स्यात् । कथम् एतद् भविष्यति ? (स्मृत्वा) आ वृथैव मयाऽऽत्मा खेद्यते । मायापतिः खल्वहम् । तथा भाषणे को दोषः । पश्चात् कः पश्यति किम् अहं करोमि,—अनेनापदेशेन मायाऽपि दृष्टा भवति (स्मयते) तथा वक्तव्यं यथा सा मयि विश्वसिति यन्नाहं यौतुककामः ।

(सहसा दूरभाषस्य घण्टिकाध्वनिः । मायापतिरुपसर्पति ध्वनिग्राहकं गृहीत्वाऽऽसन्द्याम् उपविश्य) हलो, को भवान् ? किम् उक्त

रामाधीनः ? अहं मायापतिः ब्रवीमि, नमस्कारः। ··· ··· अपि अनामयं भवतः ? (उच्चैर्वंदनम् अभिनयन्) किम् उच्यते, भवत्कृपया अनामयं सर्वत्र ? हिः हिः हिः ··· प्रभोः कृपा। कोऽहं वराकः। अस्तु। कस्तावद् आदेशः ? किम् ··· कन्यायाः परिणयविषये ? श्रीमन्, तस्मिन् विषये तु पूर्वम् उक्तम् एव मया ? किम् उच्यते ? तत्तु नितराम् अधिकम्। महाशय, मम प्रतिष्ठां भवान् जानाति। पञ्चाशत् सहस्राण्यपि मम सुलभानि। केवलं भवतः कन्याया गुणान् पूर्वं परिचयं चानुरुध्य मया दशसहस्रमात्रं याच्यते। किं कथ्यते दशसहस्रमुद्रामात्रम्? महाशय, किं मम उपहासम् अभिलषति भवान् ? दशसहस्रमुद्रास्तु प्रतिष्ठामात्रम्। अन्यथा सर्वाणि गुणवन्ति सोपस्कराणि गृहोपकरणानि अपेक्ष्यन्ते। किम् उच्यते ? वरयात्रिणां का संख्या। यत् सत्यम् ··· अयं कठिनतमः प्रश्नः। किम् उक्तम्, कथम् इति ? हुम् ··· किं न विदिता मम सामाजिकी स्थितिर्भवता यद् एवं पृच्छ्यते ? समाजस्य सर्वेषु वर्गेषु मम सुहृदः, सहकारिणः, शुभेच्छवश्च। कस्तावन् मयोपेक्षणीयः ? किम् उक्तम्, अस्त्येतत् सर्वम्। कयाचित् सीमया भवितव्यं तत्र इति। आम्, अनुमानतः शतत्रयं वरयात्रिणां भविता। ततोऽधिकतराऽपि संख्या संभाव्यते। (श्रवणम् अभिनयन्) किम् उच्यते राजकीयः प्रतिबन्धः ? भवतोऽभिप्रायः अतिथिसंख्यानियन्त्रणनियमेऽस्ति ? (हसन्) महाशय, मादृशे जने जामातरि सम्पद्यमानेऽपि तादृशं भयं भवतः ! अलं तस्य चिन्तया। तत्सर्वम् अहं समाधास्ये। (पुनः श्रवणम् अभिनीय) किम् उक्तम् महान् अयं व्ययभारः। अल्पवेतनोऽहं कथमेनं वोढुं प्रभवामि इति ? (कठोरस्वरेण) न शक्यते चेत् को भवन्तं प्रार्थयते। अन्यः कोऽपि स्वात्मेव बुभुक्षितः अन्विष्यताम्। किं मां भूयो भूयोऽनुबध्नासि। (श्रुतिम् अभिनीय) अलम् अलम् इदानीम्। नाऽस्ति तवैव कन्यका। नाऽहं नग्नकैः सह वार्तालापं कर्तुमिच्छामि। उपानत् खलु शिर आरोढुम् इच्छति। हुम्··· (सक्षोभं ध्वनिग्राहकं निक्षिपति उत्थाय च परिक्रामति।) न जाने किम् एते चिन्तयन्ति। अहम् इच्छेयं चेत् शतं जना अद्यैव स्वाः कन्यका दातुम् उपतिष्ठेयुः। को नाम विशेषस्तस्य कन्यकायाः। स्वैरिणी चञ्चला च।



(भूयो दूरभाषघण्टिकाध्वनिः। मायापतिः किमपि बुद्बुदायमानो

ध्वनिग्राहकं गृह्णाति) अलम् अलम्। न भूयः निर्बन्धं श्रोष्यामि। स्वैरिणी ··· चञ्चला (सहसा ध्वनिः श्रूयते) हला को ब्रवीति। अहं मायापतिः। नाऽहं किमपि श्रोतुमिच्छामि (पुनः श्रुतिम् अभिनीय) किम् उक्तम्, किं भवान् कुपित इव लक्ष्यते? कथं न कोपम् अनुभवानि। क्षुद्रा मया सम्बन्धम् इच्छन्ति, किं विवक्षितं भवतः। (पुनः स्त्रीस्वरः श्रूयते) मायापतिमहाशय, प्रकृतिस्थेन श्रूयतां तावत्।

मायापतिः—(विमृशन्) अये, अत्र तु स्वरव्यत्यास इव। अन्य एव कश्चिद् आलपति, न मया क्षोभादुपलक्षितम्। (स्वरं मृदूकृत्य) को भवान् कुतो वा ब्रवीति। (अपरतः हास्यध्वनिना सह) भो भवतीति कथ्यताम्। इतः प्रगतिशीलसमाजकार्यालयाद् ब्रवीमि।

माया०—किमुक्तं भवतीति? क्षम्यतां न मया विभावितम्। काऽत्र भवती। (ध्वनिग्राहके खिलखिलाशब्दः श्रूयते, ततः) किम् उच्यते। कया नाम स्वैरिण्या चञ्चलया वा विप्रलब्धो भवान् यत् माया अपि विस्मृता इति (सवैलक्ष्यम्) हिः हिः हिः ··· ··· कथम् अत्र भवती मायादेवी? (कोमलस्वरेण चाटुकारी भवन्) क्षम्यतां मयाऽजानता किमपि दुरुक्तं चेत्। किम् उक्तम् ··· नाऽस्ति क्षमाया अपेक्षा, प्रभवन्ति महान्तः यत् किमपि वक्तुम्। इति। मा तावत् अन्यथा संभाव्य, नमस्करोमि। अपि अनामयं भवत्याः। (श्रुतिम् अभिनीय) किम् उच्यते, अपि भवतोऽपि अनामयम् इति? हिः हिः हिः···जानाति भवती। अस्मादृशां कीदृशं अनामयम्। को नाम पश्यति मृतं जीवितं वा। किम् उच्यते—सा स्वैरिणी चञ्चला वा द्रक्ष्यति। इति। अन्यप्रसङ्ग उक्तं गृहीतं किञ्चिद् अत्रभवत्या। अन्यथा न सा काऽपि भवति। किम् उक्तं भवति कियत् कालं भवता एकाकिना स्थीयते इति? एकाक्येव अहं यावद् भवती न आगच्छति। किम् उक्तम् किं मया आगतया भवतीति? हिः हिः हिः ··· ··· भवादृशीनां संगसुखम् एव बहु। किम् उक्तं ··· नाऽस्ति ममावकाशः इति? देवि, सत्यम् एव। अन्येभ्यो दत्तेऽवसरे कुतोऽस्मभ्यम् अवकाशः। (पुनः कर्णं दत्त्वा) अलम् अन्यथा चिन्तयित्वा इति। अस्तु, परं क्व भवत्या गन्तव्यम्? किम्—यौतुकविरोधिन्यां सभायां भाषितुम् इति। साधु, भवादृशी तु तत्र गन्तुम् अर्हत्येव। (पुनः श्रुतिम् अभिनीय) किम्

उच्यते भवताऽपि अवश्यं तत्रोपस्थातव्यम् इति ? भवति, कस्य साहसं भवत्या आदिष्टं प्रतिवदितुम् । परं कः कालः सभायाः ? किं कथ्यते—सायंकाले षड्वादनसमये इति । अस्तु । नियतम् आगत्य भवत्याः समागमसुखम् अनुभविष्यामि । नमस्कारः ··· । (ध्वनिग्राहकं मुक्त्वा उत्तिष्ठन्) अहं नाम्ना मायापतिः सा तु स्वयं माया । इयम् आयोज्यमाना सभाऽपि तस्या एव विलास इति तर्कयामि ।

(पुनः दूरभाषध्वनिः । ध्वनिग्राहकं गृहीत्वा ।) हला को भवान् ? किम् उक्तम् ? राजकीयकर्मचारिसंघस्य मन्त्री कामराजः, नमस्ते कामराजमहाशय, अपि सर्वं कुशलम् ? किम् उक्तं कर्मचारिणां कुतः कुशलम् इति । कथम्, एतादृशी का विपत् समापतिता ? किम्, उत्कोचप्रिया अधिकारिणोऽधीनस्थानकर्मचारिणोऽन्येभ्यः कार्यार्थिभ्यः केनाऽपि व्याजेन उत्कोचं ग्रहीतुं बाधन्ते । अस्वीकुर्वाणांश्च अनेकधा मिथ्याभियोगैः सन्दूष्य निगृह्णन्ति, मन्त्रिणोऽपि तेषामेव कथने विश्वसन्ति, इति । परं ये शुचयः कर्मचारिणस्ते संभूय तादृशामधिकारिणां विरोधं कुर्वन्तु । अहं तेषां साहाय्याय सज्ज एव । धन्यवादः ··· । (ध्वनिग्राहकं न्यस्यति ।) संकीर्णवृत्तयो लोकाः खलु । आत्मना साध्वसाधु वा कुर्वाणा न विमृशन्ति । परेषां स्वल्पेऽपि दोषे क्षुभ्यन्ति ।

(सहसा एकः पुरुषः प्रविश्य मायापतेः पादयोः पतति ।)

पुरुषः—(सानुनयम्) महाशय, त्रायस्व त्रायस्व ।

माया०—(औदासीन्येन पश्यन्) उत्थाय कथ्यतां कुतस्त्रातव्यो भवान् इति ।

पुरुषः—आसनम् अधिष्ठाय भवान् शृणोति चेत् सर्वं कथयामि ।

माया०—(घटीयन्त्रं पश्यन् व्यग्रतां दर्शयित्वा) शीघ्रम् उच्यताम्, मया गन्तव्यम् अस्ति ।

पुरुषः—(निराशः सन्) अहं ममाधिकारिणा नियोगान् निलम्बितः । भवतः स मित्रम् । भवतो वचनेन स मां पुनः नियोक्तुं प्रभवति ।

माया०—किं तस्याभिधानम् ?

पुरुषः—रामनारायण इति ।



माया०—योऽसौ सार्वजनिकनिर्माणविभागे प्रधानयान्त्रिकः ?

पुरुषः—आम् श्रीमन् ।

माया०—किं भवता तस्याऽपराद्धम् ?

पुरुषः—मया तस्योत्कोचग्रहणम् अधिकृत्य मन्त्रिणे निवेदितम् इति सन्दिहानेन अहं मिथ्याभियोगेन निलम्बितस्तेन ।

माया०—(इतस्ततः परिक्रामन् पुनः स्थित्वा) अत्र मया किं कर्तुं शक्यते ?

पुरुषः—भवान् तं प्रत्याययितुं शक्नोति यत् निर्मूलस्तस्य सन्देहः ।

माया०—परं कथमहं जाने यद् भवान् निर्दोषः । नाऽहं भवन्तं परिचिनोमि ।

पुरुषः—निर्वाचनकालेऽहं यत्रतत्र भवतः प्रचारं कृतवान् इति न स्मरति भवान् ?

माया०—(उपेक्षया मुखं परावर्त्य) कार्यकाले भूयांसो जना एवं कथयन्ति । यदि भवान् न क्षुभ्यति तर्हि पश्चात् स्वयमेव पुनर्नियुक्तो भविष्यति । अत्र क आवेगः ?

पुरुषः—(कथञ्चित् कोपं संहृत्य) कुटुम्बी खल्वहम् । महार्घताकालेऽल्पवेतनेन कथं परिवारं भरिष्यामीति आवेगः ।

माया०—(क्षणं तूष्णीं परिक्रम्य तरयाभिमुखं स्थित्वा) अत्र विषये अहं तु एकम् एवोपायं पश्यामि यदि भवान् कर्तुं क्षमः ।

पुरुषः—(आशया सोत्साहम्) कीदृशः सः ?

माया०—(शनैः) जानात्येव भवान् यद् रामनारायणः कथम् उत्कोचप्रियः । दानं विना स न परिचयम् अपि अनुरुणद्धि । अतः (करेण संकेतं कृत्वा) किमपि उपहर्तुं शक्नोषि चेत् कार्यम् इदं सुखेन सम्पत्स्यते ।

(पुरुषः सविस्मयं तस्य मुखं निरीक्षते ।)

माया०—(साटोपम्) शीघ्रम् उच्यतां यदि रोचते मार्ग एषः ।

पुरुषः—(भावावेशं संयम्य) कियद् धनम् अपेक्ष्यते ?

माया०—सहस्रद्वयाद् ऊनेन किं सम्पद्यते ? एतावताऽपि मामनुरुध्यैव तुष्टो भविष्यति ।

पुरुषः—महाशय, सङ्कटे पतितो जनः कुशकाशमप्यवलम्बते। परं भवान् भ्रष्टाचारनिषेधसमितेरध्यक्षः। अस्मद्विभागीयकर्मचारिसंघस्य च मान्यो नेता। तथापि उत्कोचदानं प्रस्तौतीति किम् एतद् युक्तरूपं भवतः ?

माया०—(सवैलक्ष्यम्) भद्र !

संशये पतितो नैवं निम्नोन्नतमवेक्षते ।
मज्जन् जनो न किं सिन्धुं शवेनाऽपि तितीर्षति ?

पुरुषः—शक्तिर्मे यदि धनं दातुमभविष्यत् नाहं तव साहाय्यम् अयाचिष्ये। परं ज्ञातमनेनोपोद्घातेन यथा तृणच्छन्नकूपोपमो नेता भवान् इति। भवतु। गच्छामि।

अन्तः काका वहिर्हंसा व्यवहारे भुजङ्गमाः।
एतादृशा विटा यत्र नेतारस्तत्र शं कुतः॥

(निर्गन्तुमिच्छति)

माया०—भो नामाऽपि तावदुच्यतां भवतः यथाहं तस्मै निवेदयिष्यामि किमपि।

पुरुषः—स्वयं श्रोष्यते पश्चात्, इदानीं कथने नाऽस्ति लाभः।

(गत- एव)

माया०—अहो, मधु विचिन्वता मया सरघा एव विप्रकृताः। अयं तावत् सहकर्मचारिषु सर्वं वृत्तं निवेद्य तान् मद्-विरुद्धान् उद्योजयिष्यति। (घटीयन्त्रं विलोक्य) हन्त, अपराह्णस्य सार्धत्रयवेला जाता। यावदसौ गत्वा मद्विरुद्धं प्रचारं करोति, ततः पूर्वमेव किमपि प्रतिविधेयम्। अतः परिधानाविना सज्जो भवामि।

(निष्क्रान्तः)

[ जवनिका-पातः ]

## द्वितीयं दृश्यम्

### स्थानम्—नगरस्य बाह्योद्यानम्

(एकः पुरुषः पाशहस्तः प्रविशति)

पुरुषः—हा हन्त ! संसारेऽस्मिन् दारिद्र्यं नाम जीवतोऽपि मृत्युः। विशेषतः कन्यापितुः। कुतः—

चिन्तां भर्तुरथात्मनोऽपि जननी सूते समं कन्यया
कस्मै कुत्र कथं कदा च विधिवत् सा दास्यतेऽक्लेशतः।
किं देयं नु तया सहोत कियदित्येतत् कुतो वा भवेत्
दत्तं तच्च तथा च सा च सकलं सम्पत्स्यते शर्मणे ॥

मयि च सर्वमेतत् सत्यमेव जातम्। मम कन्या माया सुगुणा सुरूपा दक्षा च। तथापि नाऽहं तस्याः प्रदाने समर्थः। यौतुकाकांक्षिणां प्रार्थना सीमानमतिक्रान्ता यस्याः पूरणं मादृशस्य दरिद्रस्य कृते दुष्करम्। वराकी माया च सम्प्रति चतुर्विंशे वर्षे वर्तते परं नाऽहं सम्भावयेऽद्यापि तस्याः पाणि-पीडनम्। अयं मायापतिस्तस्यां स्निग्धदृष्टिः सा च तस्मिन् सरुचिरिति ज्ञात्वा मया तस्याः करग्रहणाय सोऽर्थितः परं ककुद्‌भ्रमेण तेनाऽहं तथा तिरस्कृतः यथाऽहं जीवनेऽपि लज्जे। अत इदम् अपमानितं जीवनं पाशेनाऽनेनात्मानमुद्‌बध्य त्यजामि। हा पुत्रि माये ! मुषिताऽसि ? हा प्रिये ! वञ्चितासि दग्धात्मनाऽनेन। हा पुत्राः ! निर्दयोऽयं युष्माकं जनकः गच्छति युष्मान् परित्यज्य।

(इति विलप्य वृक्षस्कन्धे पाशम् उद्‌बध्नाति। पाशे गलं दातुम् इच्छति तावन् नेपथ्ये गीतं श्रूयते।)

किं मानव ! जीवनमवमनुषे ?
न्यासस्त्वयि निहितो गुरुरेतद् विधिना, किमरे त्वं तं कृणुषे ॥
लूतावदिदं भो निजबन्धनजालं न त्वया किं विततं रे।
पतितः स्वयमस्मिन् स्वैर्दोषैर्मूर्धानमिदानीं किं धुनुषे ॥
किं मानव ! जीवनमवमनुषे ?
परपीडनहेतोर्ये पाशा दृप्तेन कृता बहु रीतीनाम्।

अधुना गलबन्धस्तव जातः निजकर्मफलं किं नो सुनुषे ।।
किं मानव ! जीवनमवमनुषे ?
मिथ्यामदमूढः स्वं मत्वा कुल-जाति-गुरुं त्वं लोकं वा-
जानासि लघुं चेद् गौरवदं किं कर्म कदाचिद् रे तनुषे ?
किं मानव जीवनमवमनुषे ?
किं भ्राम्यसि भूयो मरुराशौ सन्तापमयोऽयं ननु पन्थाः ।
पिब प्रेमसुधामयि ! शमहेतोः किं वह्निकणान् भो अवचिनुषे ।।
भूतेषु दयामयि धेहि सखे ! शरणं भव दीनानाथानाम् ।
उत्साहमयो भव धीरमनाः सफलाय यतेथा निजजनुषे ।।
किं मानव जीवनमवमनुषे ।।

(गीतध्वनिर्विरमति)

पुरुषः—(उद्बन्धनाद् विरम्य) अये ! कोऽयं गीतद्वारा माम् अस्माद् गर्हितात् कर्मणो वारयति । (गीतध्वनेर्दिशि पश्यति) परं नाऽत्र कोऽपि लक्ष्यते । (परितश्चक्षुषी निरूपयन्) तर्हि केन सञ्चारिता मयि नवजीवनाशा ?

(सम्मुखे सत्यप्रकाशः समागच्छन् लक्ष्यते ।)

पुरुषः—मन्ये, अनेनैव उदाराशयेन कृपणोऽहम् उपदिष्टः ।

सत्यप्रकाशः—( समीपम् आगत्य ) दिष्ट्या भवान् आत्मघातपापाद् विनिवृत्तः । सफलो मे यत्नः ।

पुरुषः—महात्मन् ! अकारणबन्धो ! जीवनदानेनानेन नितराम् उपकृतोऽहम् ।

(इति पादयोः पतितुम् इच्छति ।)

सत्य०—(ससम्भ्रमम् अन्तराल एव तम् उत्थाप्य) अहह ! किं भवान् एतद् अपरं महापातकम् अनुतिष्ठति । नाऽहं कश्चिन् महात्मा । बन्धुस्तु अवश्यं भवामि ।

पुरुषः—महाशय ! अद्य यदा नरराक्षसाः स्वैरं काकिण्या अप्यर्थे बन्धून् जिघांसन्ति भवता तु काले समागत्य जीवन-सन्देशामृतदानेन उपकृतोऽस्मीति कथं न भवान् महात्मा । अस्तु, कं भवन्तं दीनानुकम्पिनं जानीयाम् ?

सत्य०—अहं जनानां सामान्यसेवकः। सत्यप्रकाशं मां वदन्ति। अथ भवान् ?

पुरुषः—अहं रामाधीनः। स्थानीये पत्रालयविभागे लिपिकः।

सत्य०—किं तावद् भवतो निर्वेदकारणम् ?

रामाधीनः—कुटुम्बी खल्वहम्। ममैकादश सन्ततयः। तासां पञ्च पुत्राः षट् च कन्यकाः। अस्मिन् महार्घता-युगे एतावतः परिवारस्य भरणम् अपि कठिनम्। सञ्चयस्य तु का कथा ?

सत्य०—परिवारस्य बृहत्त्वम् एवं खलु लोकं क्लिश्नाति। किं भवान् एकाकी अर्जक उत सन्ततिरपि ?

रामा०—केवलं ज्येष्ठा पुत्री किमपि अर्जयति। सा हि राज्येनाऽप्रमाणिते विद्यालयेऽध्यापयति। तत्र वेतनस्य कियती मात्रा दीयते इति तु भवतोऽपि विदितम् एव।

सत्य०—आम्, वेद्मि सर्वम्। अथ कियद् अधीतं भवत्-पुत्र्या ?

रामा०—स्नातक-परीक्षाम् उत्तीर्याऽध्यापन-प्रशिक्षणम् अधिगतम्।

सत्य०—(क्षणं विरम्य) प्रशिक्षिता चेत् राजकीयसेवायै कथं न प्रयतितम् ?

रामा०—बहु प्रयतितं परं निष्फलं सर्वम् अभवत्। अपरञ्च···(इत्युक्त्वा मध्ये विरमति।)

सत्य०—अपरं किम् ?

रामा०—(मुखं नीचैः कृत्वाऽश्रूणि विसृजति।) किं कथयानि महाभाग! लज्जा दुःखं च न वक्तुम् अनुजानीतः।

सत्य०—उच्यतां यदि न रहस्यम्।

रामा०—मम कन्याऽनेन मायापतिना प्रलोभिता यथा तं परिणयति चेत् स तस्या अनुजं क्वाऽपि राजकीयसेवायां नियोजयिष्यति। अतो लब्धेऽप्य-वसरे सोऽतिक्रान्तः।

सत्य०—(शिरो घूर्णयन्) हुम् (इत्युक्त्वा किमपि विचारयन् तूष्णीम् इतस्ततः परिक्रामति, पुनः स्थित्वा) किमभिधानं भवतः कन्यायाः ?

रामा०—माया इति।

सत्य०—किं सैव या गतदिवसे यौतुकविरोधिन्यां समायां प्रधानवक्त्री आसीत् ?

रामा०—आम् श्रीमन् ।

सत्य०—मायापतिस्तां कामयत इति तु मया श्रुतचरम् । इतः परं तु जानामि ।

रामा०—यदि भवान् एतावज् जानाति नाऽस्ति शिष्टस्य गोपने किमपि प्रयोजनम् । तदपि निवेदयामि ।

सत्य०—अवहितोऽस्मि ।

रामा०—मायापतेः स्वपुत्र्यां भावं ज्ञात्वाऽहमपि तस्य प्रतिष्ठाविगुणैराव-र्जितस्तेन सह तस्या विवाहम् अचिन्तयम् । तावन् मायाऽपि तस्मिन् सरागाऽऽसीत् ।

सत्य०—ततस्ततः ।

रामा०—कतिपयैर्दिनैर्मायया ज्ञातं यथा न मायापतिस्तया सह परिणये सरुचिः । केवलं तस्यामभिकः सः । ततः प्रभृति सा तं दूरात् परिहरति ।

सत्य०—ततस्ततः ।

रामा०—शृणोतु महाभागः । मया सोऽप्रत्यक्षं जनान्तरद्वारेण पश्चात् प्रत्यक्षं च सुता-प्रदान-प्रस्तावेनामन्त्रितः । तेन तु ककुद्मापसदेन स्पष्टं यौतुके दशसहस्रं मुद्रा गुणवन्ति गार्हस्थ्योपकरणानि च याचितः मया चाऽसामर्थ्ये निवेदिते निष्ठुरं तेन प्रत्याख्यातः ।

सत्य०—(आकाशाभिमुखं पश्यन्) आः प्रच्छन्नकाक, ईदृशस्तव दम्भः ! गत-समायां यौतुकविरोधे कीदृशं वाग्जालं वयति स्म । अहो ! प्रपञ्चोऽस्य खलस्य । यामेव कामयते तामेव दोग्धुम् इच्छति । (रामाधीनं प्रति) अधुना कीदृशो भावो मायायास्तं प्रति ?

रामा०—भग्नप्रणया सा तस्य नामाऽपि जुगुप्सते ।

सत्य०—साधु । परं नगरे कुख्यातं मायापतिम् अपि भवान् साधुम् अजानात् इति चित्रम् ।

रामा०—बहुशः श्रुतम् । परं तस्य धनादि दृष्ट्वा कन्यायाः सुखं काङ्क्षता मया तत् सर्वम् उपेक्षितम् ।

सत्य०— वस्तुतः समाजस्य दुर्दशायां तवीय आत्मदोषोऽपि मूलम् ।

रामा०—(सवैलक्ष्यम्) कथम् ?

सत्य०—किमत्र वक्तव्यम् ? सर्वोऽपि जनः स्वकन्यायै स्वकुलादपि वरीयसः कुलाद् वरं मार्गयते । धनिभिः प्रवर्तितया यौतुकप्रथया आभिजाणि निर्धना अपि जायन्ते । किं भवताऽन्यत् सत्पात्रं न लभ्यते यत् तस्मै व्याघ्राय हरिणीयं दातुं कल्पिता ।

रामा०—(सखेदम्) श्रीमन्, सर्वेषां मुखानि अद्य व्याघ्राणाम् इव व्यात्तानि । शिक्षिता युवानः श्वशुरधनेनैव धनिका बुभूषन्ति ।

सत्य०—आमयोऽयं समाजस्यास्थिषु बद्धमूलः । सम्प्रति दुश्चिकित्सो जातः । भवतु । अहं भवतः कन्यायै वरं लप्स्ये ।

रामा०—(अञ्जलिं बद्ध्वा) यद्येवं नितराम् ऋणी भवतो भविष्यामि ।

सत्य०—परिवारस्य बृहत्त्वम् अपि चार्थिकदुरवस्थाया हेतुः । अद्यापि जनानां विश्वासो यथा सन्ततिर् ईश्वरस्य कृपयैव जायते ।

रामा०—महाशय, यदैक एकस्याऽप्यपत्यस्य मुखं द्रष्टुं लालायते, कृतेष्वपि बहुषु विवाहेषु न सन्ततिं लभते, अपरश्च···

सत्य०—(मध्ये आक्षिप्य) शतेन बालानां क्रीडति इत्येव विवक्षितं भवतः ?

रामा०—आम् श्रीमन् !

सत्य०—तत्र न केवलं विधिर्निदानम् । पुरुषस्य स्त्रिया वा प्रजननशक्तेर् अभावः, अधिका विलासप्रवृत्तिः सततं सहावस्थानम् इत्येवंविधानि बहूनि कारणानि सन्तति-वैषम्यस्य ।

रामा०—(सविस्मयम्) किं सन्ततिहीनाः सर्वेऽपि रोगिण एव ?

सत्य०—एतत्तु परीक्षया ज्ञातुं शक्यते । वस्तुतः प्रश्नोऽयं सन्ततेर्योगक्षेमस्य । स्वल्पायां सन्ततौ तस्या भरणे पोषणे, शिक्षणे च न काठिन्यं भवति । भवतः कियन्ति अपत्यानि शिक्षां लभन्ते ?

रामा०—(सलज्जम्) श्रीमन् ! द्वौ पुत्रौ कन्या चैका जनता-विद्यालये पठन्ति । तेषां शुल्कादेः परिधानस्य च तावान् व्ययो भवति यथाऽन्ये शिक्षाऽभावात् सीदन्ति ।

सत्य०— इदम् अपरं वैषम्यम्। एते जनताविद्यालया नाम्नैव जनताविद्यालयाः। वस्तुतस्तु श्रीमतां ते। तैः श्वेतकार्पटिकानां नवा श्रेणिः प्रसूयते याऽऽत्मानं जनसाधारणाद् वरीयसीं मन्यते। किम् अन्ये विद्यालया न सन्ति यत् तत्र तावद् धनं नाश्यते ?

रामा०—तत्र शिक्षायाः स्तरो वरीयान् भवति।

सत्य०—(सक्षोभम्) वृथा वरीयान् भवति। केवलम् आंग्लभाषायां वैदेशिकसमाजस्य विषये च तेषु नैपुण्यं साध्यते परं तत्रत्यच्छात्राः स्वदेशविषये किं जानन्ति ? देवनागर्या लिखितान् अङ्कानपि न ते परिचिन्वन्ति। ते कामं होमरविषये जानीयुर्व्यासस्तु न तेषां बुद्धेर्विषयः।

रामा०—एतत्तु सत्यम्।

सत्य०—(घटिकायन्त्रं पश्यन्) अस्तु, गच्छतु भवान् गृहं स्वकार्यालयञ्च। अहम् अपि अन्यत् करणीयं पश्यामि।

रामा०—(साञ्जलिबन्धनम्) श्रीमन्, न विस्मरणीयोऽयम् अकिञ्चनः।

सत्य०—(तं करे गृह्णन्) बन्धो, सेवकोऽहं भवतः। यथाशक्ति प्रयतिष्येऽहं भवत्-साहाय्याय।

(जिगमिषति)

रामा०—(किञ्चित् स्मृत्वा) श्रीमन्, सत्यावश्यके कुत्र भवान् द्रष्टव्यः ?

सत्य०- नगरस्य वर्धमानापणे ममैका साधारणी विपणिः। तत्रैवाहं प्रायेण तिष्ठामि।

रामा०—(सविनयम्) नमस्करोमि।

सत्य०—नमस्कारः। (निष्क्रान्तः)

रामा०—वस्तुतोऽहं स्वयम् अस्य ककुद्मस्य मायाजाले निपतितः। वराकी भार्या च भगवतैव रक्षिता। अन्यथा को जानाति यदयं परिणीय तां यौतुकादिलोभेन पश्चाद् गूढं निहन्यात् (सक्रोधम्) परम् अधुना मया कूटसाधोर्दग्धमुखस्य अस्य मायापतेर्मायाजालं समाजे भेदनीयम्। तदैव मे शान्तिर्भविष्यति।

(विमृशन् शनैश्शनैर्निर्गच्छति)



[ अवनिकापातः ]

## तृतीयं दृश्यम्

(स्थानम्—मायापते गृहम्)

(सचिन्तः मायापतिः करे समाचार-पत्रं पठन् प्रविशति ।)

मायापतिः—(मुखपृष्ठे दृष्टिं निक्षिप्य) हुम्⋯किम् एतत् ! गृहमन्त्रिणा प्रान्तीयविधानसभाया भङ्गाय पुनर्निर्वाचनघोषणायै च प्रस्तावः प्रेषितो राष्ट्रपति-सकाशम् । अहो, एते जनता-मन्त्रिणः सर्वम् अपि तन्त्रम् आकुलयितुं यतन्ते ।

(सहसा समाचारपत्राद् एकं मुद्रितं पत्रं पतति)

माया०—(उत्थाप्य दृष्ट्वा च) अरे, इदं तु निमन्त्रण-पत्रम् । (आकार्य) राजदीन !

(नेपथ्ये 'आयामि' भर्तः इति शब्दः श्रूयते ।)

माया०—(निमन्त्रण-पत्रस्य पाठम् अभिनयन्) किम्⋯कुमार्या मायायाः श्रीजनार्दनेन सह आदर्शविवाहः शक्तिमन्दिरे सायं सम्पत्स्यते, भवत उपस्थितिः प्रार्थ्यते इति ।

(राजदीन आगत्य पुरस्तिष्ठति)

माया०—(तदभिमुखं पश्यन् ) क इदं निमन्त्रण-पत्रम् आनीतवान् (इति दर्शयति ।)

राजदीनः—(निपुणं निरूप्य) भर्तः, मया तु कश्चिन्न लक्षितः । मन्ये, वृत्तपत्र-हारकेण वृत्तपत्रेण सहैव आनीतं स्यात् । (सौत्सुक्यम्) कुत इदं निमन्त्रणम् ?

माया०—(किञ्चिद् अनुत्तरयन् एव सचिन्तः परिक्रामति)

राजदीनः—(पुनः पृच्छति) भर्तः, कुत इदं निमन्त्रण-पत्रम् ? न खलु माया-कुमार्या विवाहम् उपलक्ष्य ?

माया०—त्वं कथं जानासि ?

राजदीनः—ह्यः हाटे केनचित् चर्चितम् ।

माया०—किं चर्चितम् ?

राज०—यथा यौतुकार्थिना भवता तस्याः पाणिर्न स्वीकृतः । परम् अधुना कश्चित् पत्रकारो दर्शनीयो युवा विनैव केनचित् पणेन तां परिणेतुम् उद्यत इति ।

माया०—हुम् ! (सभ्रूभङ्गम्) तर्हि कथं न निवेदितोऽयम् अर्थः मह्यम् ?

राज०—भवतश्चित्तखेदं परिहरता न मयोक्तम् ।

माया०—कथं मम चित्तखेदोऽनुमितः ?

राज०—(सस्मितम्) नगरे तु इयमपि चर्चा यथा भवता मायाकुमारी एकाकिनी केनचिद् व्याजेन गृहम् आकारिता······

माया०—(मध्ये आक्षिप्य) अलं तावत् । किं किं न जाल्मा जल्पन्ति ? गच्छ, चायम् आनय ।

राज०—(स्थित एव) नगररक्षालये भवद्विरुद्धम् अयम् अभियोगो लेखितः ।

माया०—(उद्विग्नः) सत्वरं चायम् आनय ।

(पुनः समाचारपत्रे दृष्टिं ददाति)

किम्, सर्वकारेण विधानसभासदस्यानां राजकीयाधिकारिणां च भ्रष्टाचारानुसन्धानाय आयोगः स्थापितः ।

राजदीनः—भर्तः, मासत्रयाद् वेतनं न लब्धम् अद्य अपेक्ष्यते ।

माया०—(वृत्तपत्रपठनम् अभिनयन्नेव) का त्वरा ? दास्यते तत् ।

राजदीनः—त्वरा कथं न स्यात् ? गृहिणी रोगशय्यायां पतिता ।

माया०—(उपेक्षया) दास्यते पञ्चषैर्दिवसैः ।

राज०—(व्यग्रस्वरेण) पञ्चषैर्दिवसैः ? तावत् तु सा मरिष्यत्येव ।

माया०—आः कदर्थितोऽहम् अनेन । (कक्षात् दशरूप्यकाणां मुद्रापत्रम् आकृष्य निक्षिपति ।) तावद् इदं गृहाण । शिष्टं पश्चाद् दास्यते ।

(पुनः समाचारपत्रे दृष्टिं ददाति)

राजदीनः—(तथैव तिष्ठन्) भर्तः !

माया०—(उग्रस्वरेण) अरे, एकबारम् उक्तोऽसि एद् इमा दश मुद्रा गृहाण।

राज०—किम् एताभिः सेत्स्यति। पूर्णं वेतनम् अपेक्ष्यते।

माया०—(उत्थाय तर्जयन्) गम्यताम्। नाऽस्तीदानीम्।

राज०—अहमपि तावन्न गमिष्यामि यावत् पूर्णं वेतनं न लभ्यते।

माया०—(क्रोधेन कम्पमानः) तस्कर, नित्यं गृहाद् धनं वस्तूनि च चोरयन् मया कृपया मुक्तोऽसि! यावत् तव वेतनं ततोऽधिकं तु त्वया चोरितम्। किम् अधुना इच्छसि?

राजदीनः—(दृढस्वरेण) चौरस्त्वम् अहं वा।

माया०—कदर्य, दास्याःपुत्र, नितरां प्रगल्भसे! तिष्ठ, अयं न भवसि?

(इति ताडयितुमिच्छति)

राज०—(कठोर-स्वरेण) चेतय तावत्। अलं शरीरं स्पृष्ट्वा। अन्यथा……।

माया०—अन्यथा किं करिष्यसि?

राज०—

करं भङ्क्त्वा, गलं बद्ध्वा, छित्त्वा वा रसनामिमाम्।
शुचितां शिक्षयिष्यामि पातयित्वा रदांस्तव॥

माया०—तिष्ठ तावत्। अधुनैव त्वां नगररक्षकाणां करे समर्पयामि।

(दूरभाप-समीपम् आयाति। सहसा सम्भ्रान्तः प्रविश्य)

पुरुषः—मायापतिमहाशय, त्रायस्व माम्। अन्यथा गतोऽहम्।
(सहसा भूमौ पतति। मायापतिः दूरभाषयन्त्रं परित्यज्य द्रुतं तत्समीपमागत्य तस्य हृदयं परामृशति।)

माया०—रामनारायणमहाभाग, कथम् उद्विग्नो भवान्। न खलु किमपि अत्याहितम्?

(अस्मिन्नन्तरे राजदीनः शनैरेकान्ते स्थित्वा तयोर्वार्तालापं शृणोति।)

रामना०—अपि अस्मत्कार्यालयस्य कश्चित् कार्यकरः साहाय्यार्थं भवत्समीपम् आगतोऽभूत् ?

माया०—आम्, स्मरामि तावत् । किं नाम तस्य ?

राम०—बिहारिलाल इति । भवता प्रत्याख्यातः स भ्रष्टाचारनिरोध-समितेः कार्यालयं गत्वा तदीयाधिकारिभिः सह केन्द्रीयापराधान्वेषण विभागे सर्वं वृत्तं तदधिकृतेष्वावेदितवान् ।

माया०—(सचिन्तम्) ततस्ततः ?

रामना०—एतस्मिन्नन्तरे केन्द्रीयकर्मचारिसंघेन बिहारिलालस्य निलम्बनं निमित्तीकृत्य हरितालस्य सूचना दत्ता ।

माया०—(सावेगम्) एतावान् उपद्रवस्तेन कृतः ! ततस्ततः ?

रामना०—विभागीयमन्त्रिणा संघस्याधिकारिभिः प्रस्तुतं सप्रमाणम् आवेदन-पत्रं पठित्वा एकपदे ममैव निलम्बनस्यादेशो दत्तः, बिहारिलालश्च स्व-पदे नियुक्तः ।

माया०—अहो, अविचार्यकारिता मन्त्रिणः ! अधुना कीदृशी स्थितिः ?

रामना०—केन्द्रीयापराधान्वेषणविभागप्रेरणया पुरीशाधिकारिणो मम निग्रहा-यादिष्टा मामन्वेषयन्ति । अहं तेषां दृष्ट्याः परिहीयमानो निभृतम् अत्रागतः । अधुना भवानेव मां गोपयितुं शक्नोति ।

(राजदीनः शनैर्बहिर्निष्क्रामति)

माया०-अत्र भवान् सुरक्षितः । अत्रापि एक उपद्रवो जातः । (सहसा स्मृत्वा) अरे, राजदीनः क्व गतः ? (उच्चैर् आकारयति) राजदीन, भो राजदीन, क्वाऽसि ?

(सहसा कतिपयैः पुरीशाधिकारिभिः सह प्रविश्य ।)

राजदीनः—अयम् अहम् उपस्थितो भवत्सेवायाम् । (पुरीशाधिकारिणः प्रति) अयम् अत्र रामनारायणस्तिष्ठति । अयञ्च प्रवञ्चको माया-पतिः ।

पुरीशाधिकारी—महाशय रामनारायण, केन्द्रीयापराधान्वेषणविभागस्य निर्देश-कस्यादेशेन भवान् निगृह्यते । (मायापतिं प्रति) महाशय, भवान्

अपि शासनस्य वञ्चनम्, बलात्कारप्रयतनम्, राजकीयकर्मचारिण उत्कोचदानप्रेरणं स्व-गृहकर्मकरस्य वेतनाप्रदानम्, विवाहे यौतुक-पणनम् इति अपराधान् उद्दिश्य निगृह्यते।

मायापतिः—अहं तावद् विधानसभायाः सदस्यः। मम मर्यादाऽपि रक्षणीया भवति।

पुरी० धि०—अत्र न्यायाधीशः प्रमाणम्। अहं तु शासनस्यादेशपालकः। (सहकारिणो दृष्ट्वा) निगडितौ इमौ नयत बन्दीगृहम्।
(उभौ निगडबद्धौ क्रियेते। ततः सत्यप्रकाशप्रभृतयः प्रविशन्ति)

सत्यप्रकाशः—मायापते! किं नाऽधुना भवतो मायाः फलन्ति?

(मायापतिस्तूष्णीं सास्रं विलोकयति)

सत्य०—अलं वैफल्येन। नीहारपातानन्तरं भास्करोऽवश्यम् उदेति। अन्यायो न सर्वदा प्रभवति। अतो येन साहसेनापराधा अनुष्ठितास्तेनैव दण्डोऽपि सहर्षं स्वीकर्तव्यः। दण्डेन मनः शुध्यति। आगच्छत, मिलित्वा प्रार्थनां करवाम यथा नाऽस्माकं प्रवृत्तिर्भूयोऽपराधेषु भवेत्।

(सर्वे संभूय प्रार्थयन्ते)

चेतो नः सविता पुनातु भगवान्, बुद्धिः श्रमे जायतां
निर्वैराश्च मिथो विभज्य निखिला भूतीस्तु भुञ्जीमहि।
नार्यो मानधना भवन्तु चतुरा, न्यायप्रियाः शासकाः,
स्वृद्धा भारतभूर्भवेद् बहुमता विश्वस्य वीरैर्जनैः॥

('विश्वस्य वीरैर्जनैः' इति भूयो वदन्तः सर्वे निष्क्रान्ताः)

[ जवनिका-पातः ]

———

# पुरोधसः स्वप्नः

[ प्रहसनम् ]

पात्र-वर्ग।

पुरुषाः—

| | | |
|---|---|---|
| महानसः पुरोधाः | — | नायक। |
| कुशासनः | — | यमलोकस्य स्थानापन्नः शासकः |
| अयोमुखः | — | आरक्षक पुरुष। |
| शङ्कुकर्णः | — | ,, |

स्त्रियः—

| | | |
|---|---|---|
| ब्राह्मणी | — | पुरोधसः पत्नी |
| तरला | — | यमराजस्य दुहिता |

# पुरोधसः स्वप्नः

डॉ० शिवप्रसादभारद्वाजः
प्राध्यापकः, विश्वविद्यालय-शिक्षण-विभागः, साधु आश्रमः, होशियारपुरम्

## प्रथमं दृश्यम्

स्थानम्—पुरोहितस्य महाशनस्य गृहम् ।

[ नेपथ्ये ]

अहो उदर-विस्तारः कथमौदरिकस्य भोः ।
अस्मिन् महार्घता-कालेऽप्येवं मेदो विवर्धते ॥

[ ततः प्रविशति करेणोदरं परामृशयोदर-शूलं नाटयन् पुरोहितो महाशनः । पञ्चाशत्-प्रायं वयः, खर्वं तुन्दिलं च वपुः । नग्नं शिरः, मस्तके तिलकं, गात्रेऽर्धबाहु कञ्चुकम्, अधोभागे च मलिनं धौतवस्त्रम्, पादयोः पादुके । ]

महाशनः—[ श्रवणं नाटयन् ] आः कोऽयं कीनाश उदरं ममोपहसति । तथा दुर्बलं मामपि मेदस्विनं भणति जाल्मः। ध्रुवं तस्यैवाक्षिगतस्य मे शूल जातम् । [क्वणन् कुक्षिं मर्दयति] आः ··· ··· आः ··· ··· सर्वथा म्रियेऽद्य । आ ब्राह्मणि ! क्व नु मृताऽसि रे ? न पश्यसि ··· ··· ··· भर्तारं वेदनया ग्रस्तम् ? [ इति कुन्थति ] आः ·· ··· ··· आ ··· ··· आः ३ ।

[ ततः प्रविशति ब्राह्मणी । स्थूल-गात्री, अर्ध-बाहुकां चोलिकां जीर्णां शाटीं च दधती । शीघ्र-गमन-वशात् स्रस्तेन शाटिकाञ्चलेन शिरस आच्छादनम् अभिनयन्ती । ]

ब्राह्मणी—[ तीव्र-स्वरेण सोल्लुण्ठम् ] आम् ··· ··· आम् ··· ··· [illegible] मम मृत्युं कामयस्व । मन्ये ··· तदा रंस्यसे ··· अप्सरोभिः सह ।

त्वमेव नवः कामदेवस्यावतारः पृथिव्याम् यं ता अहमहमिकया वरिष्यन्ते। [हस्तेन निर्दिश्य] परं तव क्रोशनेन न मरिष्यामि।

महा०—अये, चण्डीयं, न जाने, कया पिशाच्याभिभूता सदाऽन्यदेव चिन्तयति। न तावत् पश्यति, शूलेन पीडितोऽहम्। [कुन्थति] आः सूचिकाभिरिव किमपि तुदति अन्तः। [उभाभ्यां कराभ्यामुदर गृहीत्वा] पिशाचि ... ... किं पश्यसि ? आनयसि न कामरूपी-पात्रमेकं चूर्णादिना सह। आ ... ...: आ ... ... [ घूर्णनमभिनयति ]।

ब्राह्मणी—[कर्कश-स्वरेण] अरे, दिवानिशं रथ्यावृषभ इव यत्र तत्र चरन् किं न भुङ्क्षे ? अधुना गृहमागत्य चूर्णं मार्गयसे। अपि आनीतं कदाचित् चूर्णम् ?

महा०—[विडम्बयन्] अहं तु दिवानिशं भुञ्जे। [निर्दिशन्] एषा तु वराकी सदा एकादशीम् उपवसति .. ...। तदैव दिने दिने पूर्णा दृतिरिव प्रसरति। इयं तु अस्याः क्षुधिताया दशा, तृप्ता सती नूनं महिषीं जेष्यति। [पुनर्वेदनां नाटयन्] आः ... ... मन्ये ... ... मर्तव्यम् एवाद्य। इयं तु डाकिनी न किमपि प्रतिकरोति ... ... ... केवलं कलहायते। आः ... आः ... ... ... किं करोमि ? [रुदन् पार्श्ववर्तिन्यां खट्वायां लुठति]।

ब्राह्मणी—[तीव्र-स्वरेण] तव पिता यच्छति मह्यं यदहं तावद् भुञ्जे। [अंगुष्ठं दर्शयन्ती] म्रियसे चेत् म्रियस्व। किं मे छिद्यते ? [पदान्याक्षिपन्ती वेगेन नेपथ्याभिमुखं गच्छति।]

महा०—हे विश्वम्भर देहि सुमतिम् अस्यै। मामेव वा नय लोकान्तरम्। [उच्चैः कुन्थति] हा मातः, किं करवाणि ? क्व वा गच्छानि ? श्वः तस्य यजमानस्य गृहे मुण्डन-संस्कारः। कथं गन्तव्यं तत्र ? [नेपथ्ये पादुका-शब्दः] मन्ये, समानयति किमपि सा।

[ ततः प्रविशति ब्राह्मणी पान-पात्रे कामरूपीं कर्गल-खण्डे किमपि चूर्णं च दधती। ]



ब्राह्मणी—एषाऽस्ति कामरूपी, इदं च मधुरक्षारेण विड्लवणेन च मिश्रितं यवानी-चूर्णम्।

महा०—अहो, श्रुता मम प्रार्थना प्रभुणा। सत्यमेव दत्ताऽस्यै सुमतिः।

[ यत्नादुत्थाय उपविशति। कामरूपी-पात्रं चूर्णं च गृह्णन् ] साधु! गृहणिके, साधु एतादृशी एव सुमतिर्भूयाः। [ इति वदन् स्मयमानः चूर्णं मुखे निक्षिप्य उपरितः कामरूपीं पिबति। ]

ब्राह्मणी—[पाणिं भ्रामयन्ती सामर्षम्] कामरूपी दत्ता, तेन मम सुमतिर्जाता। अन्यथा दुर्मतिरासीत्। त्वं नाऽसि दुर्मतिर्यो मम चीरप्रायां शाटीं पश्यन्नपि न पश्यसि। [ इति शाट्या अञ्चलं दर्शयन्ती रोदनम् अभिनयति। ]

महा०—अहो! अयम् अपरः प्रसङ्ग उपक्रान्तः। न मम कष्टं पश्यसि। मृतश्चेत् कस्ते शाटीम् आहरिष्यति? प्रार्थय प्रभुं मम आरोग्याय। श्वः यजमानस्य मुण्डन-संस्कारः, प्रभूतया दक्षिणया भवितव्यम्। तया मार्जयिष्यामि तवोपालम्भम्। [ इति पान-पात्रं शय्याया अधः स्थापयति। ]

ब्राह्मणी—यजमानस्यैव किम्, संभवतः तवाऽपि मुण्डनं भविष्यति। [दर्शकान् प्रति] भोः, पश्यत तावद् अस्य सुमतिं योऽधुना यजमानस्य मुण्डन-संस्कारं करिष्यति।

महा०—अस्तु ··· ··· अस्तु। त्वमेव सुमतिः। गच्छ तावत्। यावच् शयनाय यते।

[ इति शयनं नाटयति ]

ब्राह्मणी—[गच्छन्ती] भज भज महानिद्राम्। [ इति करेण मृतक-मुद्राम् अभिनीय निष्क्रान्ता। ]

[ जवनिका-पातः ]

## द्वितीयं दृश्यम्

[ रङ्गमञ्चे शय्याऽऽस्तीर्णा दृश्यते। तत्र महाशनः शयानो लक्ष्यते। सः स्वप्नं पश्यति। स्थानम्—धर्मराजपुर्या राजमार्गः। प्रभात-कालः। दिङ्मुखेऽरुणा च्छाया। पक्षिणः कलरवं कुर्वन्ति। महाशन एकस्मिन् विस्तृते चतुष्पथे स्थितः। धौतां दुकूल-युगलम्, शिरसि पट्टोष्णीषम्, अंसदेशे उज्ज्वलम्

उत्तरीयम्, कक्षे वस्त्र-वेष्टितं पुस्तकम्, पादयोरुपानहौ । दक्षिणकरेण यष्टिम् अवलम्बते । ]

महा० अहो ! सुप्रभातम् अद्य । अहं खलु धर्मराज-तनयाया आयुष्मत्याः तरलायाः पुण्यं विवाह संस्कारं निर्वर्तयितुं नगरीम् इमां सम्प्राप्तः । दिव्यं पान-भोजनं, समृद्धा च दक्षिणेति जीवत एव मे स्वर्ग-लाभः । परं कस्मिन् उद्देशे नु धर्मराजस्य प्रासादेन भवितव्यम् ? [सर्वतो दृष्टिं निपात्य] अहो सौन्दर्यम् अस्या नगर्याः ! विस्तृतः सुमसृणश्चायं राज-मार्गः । उभयतस्तस्य गगनोल्लेखिनी प्रासाद-पङ्क्तिः । परम् अत्र चतुष्पथे कया दिशा मया गन्तव्यम् ? [सहसा पृष्ठतो घण्टिकाशब्दं श्रुत्वा परिवृत्य पश्यति] अये द्विचक्रिका ! [एकतोऽपसरति । परतो विद्युच्छकटीशब्दः । आकर्णनम् अभिनीय ] अरे राम ! मृत्युमुखादेव मुक्तोऽहम् । [परतः अपसर्पति ] कुत एतावद् यातायातम् अस्मिन् मार्गे ? तैलरथानां त्रिचक्राणां जन-परिवहनानां भारवहानां च चीत्कुर्वती सरणिः । कुतोऽपि गन्तुम् अवकाशं न ददाति । संकटे पतितोऽस्मि । न खलु कश्चन पदातिः य पृच्छामि । [मार्गस्य कोणे लग्नं नाम-पट्टं पश्यति । दृष्ट्वा] हा हन्त ! इदं तु आंग्ल-भाषायां लिखितम् । [ सवितर्कम् ] न खलु अहं क्वापि अन्यत्र समागतः ? तदा तु मम गृहप्रत्यावर्तनम् अपि दुष्करम् । [खेदं नाटयन्] मया धर्मराजस्य गृहे परमान्न-भोजनस्याशा कृता आसीत् । परम् अद्य बुभुक्षयैव मर्तव्यम् ।

[ नेपथ्ये ]

अरे ! क एष धर्मस्य नाम गृह्णाति ? तिष्ठ तावत् । अधुनैव शिक्षयामि ।

महा०— [श्रवणम् अभिनीय । सविस्मयम्] यथार्थो मे तर्कः । सत्यम् अहं धर्मराज-नगर-भ्रान्त्या क्वापि अन्यत्र आगतः । अन्यथा कथं धर्मस्य नामोच्चारणमपि अत्र अपराधः स्यात् । भवतु । एष कोऽपि आगच्छति । तम् एव प्रक्ष्यामि सर्वम् । [नेपथ्ये पद-शब्दः] निकट एव कश्चिद् वर्तते । [ततः प्रविशतः कर्दम-वेषधारिणी नागरिक-भटौ । शिरसि रक्तमुष्णीषम् । परिकरे सपित्तलवर्तुलखण्डा शासन-मुद्राङ्किता चर्मपट्टिका । मुखं श्मश्रुकूर्चकादि-रहितं नातिघोरम् । करे दण्डं दधानौ ।]

एकः—अरे कस्त्वम् ?

द्वितीयः—भोः ! कुतस्त्वम् ?

प्रथमः—कथम् अत्र आगतः ?

द्वितीयः—कस्यानुमत्या प्राप्तः ?

प्रथमः—कम् अन्वेषयसि ?

द्वितीयः—किं मार्गयसे ?

प्रथमः—[द्वितीयं प्रति] अयोमुख ! मम वारः। त्वं किं मध्ये आक्षिपसि ?

अयोमुखः—शङ्कुकर्ण ! ममावसरः। त्वं किं मम वचनं व्याहंसि ?

महा०—[सविस्मयम्] अये ! इमौ नाम्नाऽऽकृत्या च यमदूतौ इव। [स्मयमानः] सत्यमेव भूमौ जना एतादृशान् नागरिकान् यमदूतान् कथयन्ति।

अयो०—[परिवृत्य] अये ! गालीं वदासि ?

शङ्कुकर्णः—[सभर्त्सनम्] किं रे ! अपवदसि अस्मान् ?

महा०—[सविनोदम्] भद्रौ, नाहं युवां परिचिनोमि यद् गालीं दद्याम्। एतावत्तु भणामि, पृथिव्यां युष्मादृशान् नागरिकान् यमदूतान् वदन्ति, तेभ्यो बिभ्यति च।

अयो०—त्वं कथम् आवां दृष्ट्वा न बिभेषि ?

शङ्कु०—त्वं अस्मत्तो न त्रस्यसि ?

अयो०—पृथिव्यास्त्वम् आगतः ?

शङ्कु०—किं पातालात् समापतितः ?

महा—[स्मयमानः] सर्वं कथयामि। अहं महाशनो नाम पुरोधा धर्मराजस्य कन्यायाः पाणिग्रहण-संस्कारं निर्वर्तयितुं प्रचलितो धर्मराज-नगरं मत्वा भ्रान्त्या इह प्राप्तः। न च जानामि, केयं पुरी, कथं वा प्रतिगन्तव्यम्।

अयो०—अयं पुनर्धर्मराजस्य नाम गृह्णाति।

शङ्कु०—अरे, त्वयाऽपि धर्म-नाम गृहीतं, त्वमपि दण्डम् अर्हसि।



अयो०—अरे त्वमपि तथैव उच्चारयसि। त्वमपि अर्हसि। (पुनः महाशनं प्रति) किं भ्रान्त्या समागतः ?

शङ्कु०—किं किं पथि स्खलनात् प्राप्तः ? परम् इह तु मृता एव आयान्ति । त्वं किं मृतकः ?

अयो०—परेता अत्रागच्छन्ति त्वं तु सशरीरः ?

महा०—कथं मृता एव आयान्ति ? तर्हि यमलोक एषः ?

अयो०—अथ किम् । तर्हि कथं जीवन् आगतः ?

महा०—अरे पुरोहितोऽहम् । विवाहं सम्पादयितुं समागतः ।

शङ्कु०—किं किं पुरोहितः ? कस्य विवाहं सम्पादयितुम् आगतः ? अत्र किं विवाहोऽपि भवति ?

अयो०—[सोत्साहम्] किं मम विवाहं सम्पादयितुम् ?

शङ्कु०—[दीनस्वरेणैव] किं न मम ?

महा०—[पद्मुमम्] अरे, मनोहरम्, धर्मराजस्य कन्याया विवाहं निर्वर्तयितुम् आगतः । आनयथः चेत् कन्यां युवयोरपि सम्पादयामि ।

उभौ—[सरोषम्] कथं पुनरपि तदेव नामोच्चारयति ?

महा०—भोः ! किंनिमित्तम् अत्र धर्मनाम-ग्रहणं वर्जितं तस्य राज्ये ।

अयो०—अरे ! धर्म-निरपेक्षम् इदं राज्यम् ।

महा०—[सविस्मयम्] तर्हि कस्य राज्यम् ?

शङ्कु०—काम-राज्यम् ।

महा०—काम-राज्यम् ? किं काम-नगरी इयम् ?

शङ्कु०—अयं, अयं तु वृथा विवादेन मस्तिष्क-शूलम् एव उत्पादयति । प्रकृतं वद, क्व जिगमिषसि ?

महा०—नहि, मया पूर्वमेव उक्तं यद् धर्मराजं द्रष्टुम् इच्छामि ।

अयो०—[साक्षेपम्] पुनस्तदेव कथयसि ? मन्ये, न यमलोकस्य यातनां जानासि ?

महा०—भवतु, यमराज इति वक्तव्यम् । क्व स द्रष्टव्यः ?

शङ्कु०—नाऽसौ सन्निहितोऽत्र ।

महा०—[साश्चर्यम्] किं यमोऽपि यमलोके न सन्निहितः ? किमहम् शृणोमि ? तर्हि क्व गतः ?

अयो०—अरे कुतोऽयं शिरःशूलम् उत्पादयितुम् आगतः । स खलु दीर्घावकाशं गृहीत्वा अमेरिका-देशं गतः ।

महा —किमर्थम् ?

अयो० —पाश्चात्य-देशानां संविधानानि शासन-पद्धतिं च अध्येतुम् ।

महा०— किम् अत्रत्यं संविधानं न युक्तम् ?

शङ्कु०—अरे पुरातनं तत् । न अद्यतनीम् अपेक्षां पूरयति ।

महा०—[ सशिरःकम्पम् ] नियतं विन्ध्यस्तरेत् सागरम् । तर्हि कोऽत्र शासकः ?

शङ्कु०—अस्ति कुशासनो नामा यमलोकार्हः कश्चन भारतवर्षाद् ऋणे गृहीतः सेवाधिकृतः स्थानापन्नः शासकः ।

महा०—[शिरश्चालयन्] हुम् ! अथ तत्रभवान् चित्रगुप्तस्तु स्यादेव । तस्यैव गृहं निर्दिश ।

शङ्कु०—किं त्वं नो वेतनं ददासि यत् स्वं नियोगं त्यक्त्वा त्वां तस्य गृहं नयाव ? स तु नगराद् बहिः क्वचिद् वर्ज्य-क्षेत्रे कालं यापयति ।

महा०—[साश्चर्यम्] किं वर्ज्यक्षेत्रे कालं यापयति ? किं तस्यापि हृतोऽधिकारः ?

अयो०—अथ किम् । न स आङ्ग्लभाषां टङ्कणं च जानाति ।

महा०—[खेदं नाटयन्] शिव ! शिव ! किमिदं शृणोमि ? क्वाधुना गच्छानि ?

अयो०—अरे, सन्ति अनेकानि नरकाणि गन्तुम् । किमत्र चिन्तया ?

महा०—अहो, क्व मया दिव्यं पान-भोजनं सम्भावितम् क्व च एकपदे एकादशीव्रतं जातम् । (स्मरणम् अभिनीय) भद्रौ, यमराजे गतेऽपि तस्य कन्यका तु इहैव स्यात् ? कदाचित् सैव माम् अभिज्ञाय किमपि अशनादि-संविधानं कुर्यात् ।

[अत्रान्तरे प्रविशति त्रयोविंशति-वर्षीया तरला । तस्याः दिव्यं वपुः, अर्धलूना मुक्ताः कुन्तलाः, अर्धबाहुका भग्नांशुका चोलिका, आप्रपदीनं पादयामम्, उन्नत-तले उपानहौ, करे चटक-क्रीडनस्य जाल-दण्डः । मुखेन गीतमिदम् अस्फुटं गुञ्जति—

हृदि भवने कुरु दयित ! निवासम् ।

पद-युगलं विनिधेहि नयनयोः पक्ष्मतलेऽन्तर्विश सविलासम् ॥]

तरला—अयोमुख ! अपि सन्निहित-कुशासन-महाशयोऽद्य ?

[अयोमुख-शङ्कुकर्णौ सावधानौ करं मस्तके कृत्वाऽभिवादनं कुरुतः । तरला शिरश्चालनेन अभिवादनं स्वीकरोति । ]

अयो०—[सविनयम्] भर्तृदारिके ! अद्य तु स्व-कार्यालय एव वर्तते ।

महा०—[अग्रे उपसृत्य] पुत्रिके ! तरले ! त्वम् अपि अस्मिन् वेषे ? चित्रं चित्रम् । अपि कुशलं ते ?

तरला—[साक्षेपम्] आः ! कस्त्वं मां नामग्राहं सम्बोध्य आक्षिपसि ? [शङ्कुकर्णं प्रति] शङ्कुकर्ण ! कोऽयं कुतोऽत्र ?

महा०—अये, त्वं स्वं पुरोहितं महाशनम् अपि विस्मरसि ? कतिपय-दिनानि पूर्वमेव तव पितरं दृष्ट्वाऽहं ते तारामैत्रकं विचार्य परिणय-दिनं निरचैषम् ।

तरला—[ सरोषम् ] आः, अलं तस्य चर्चयाऽपि । [ सावज्ञम् अयोमुखं प्रति] युवां किमत्र कुरुथः ?

अयो०—भवति ! प्रशासकाय एनं निवेदयितुं नयावः ।

तरला—अहमपि पश्यामि तम् । [ निष्क्रान्ता ]

महा०—हन्त ! एषाऽपि आत्तगन्धा युग-प्रवाहेण, तत एव एनयाऽस्मि तिरस्कृतः । [ शङ्कुकर्णं प्रति ] भोः ! कथमियं परिणयकथयाऽपि कुप्यति ?

शङ्कु०—[ शनैः ] अरे, प्रणयम् इयं वाञ्छति न परिणयम् ।

महा०—हा ! धर्म [ इत्यर्धोक्ते ] य···य···य···यमराजस्य कन्ययाऽपि न्यक्कृतः । अस्या मातैव दृश्येत । कदाचित् सा मां गोदुग्धेन सत्कुर्यात् ।

शङ्कु०—गोदुग्धेन तु किम्, शुनी-दुग्धेन कामं सत्कुर्यात् [ उभौ हसतः ] ।

महा०—[ स्तब्धो भूत्वा ] किं किं शुनी-दुग्धेन ? किम् अत्रत्याः शुनी-दुग्धं पिबन्ति ? ... ?

अयो०—[साट्टहासम्] आ ··· हा ··· हा ··· हू ··· हू ··· अरे! गवां का कथा? तासां जननी सुरभिरपि गता शौनिकागारम्। अधुना श्वानः पाल्यन्ते श्वानः। [मुखं निकट आनीय वदति।] अपि श्रुतम्?

महा०—[कर्णौ पिधाय] अत्रापि गोहत्या? यदि गावो न सन्ति तर्हि वैतरणीं कथं तरन्ति?

शङ्कु०—[सामाजिकान् अभिलक्ष्य] पश्यत अस्य बालिशत्वम्! अरे! तस्यां सेतुबन्धार्थं वैदेशिकी मुद्रा अपेक्ष्यते। अतो गोमांस-विक्रयार्थं सकला अपि गावो घातिताः। वृक्षाणां दुग्धम् अत्र पीयते।

महा०—[कर्णौ पिधाय] अलम् अतः परं श्रुत्वा। [उभौ प्रति] भद्रौ धर्म ··· ··· [इत्यर्धोक्ते पुनः स्मृत्वा] क्षम्यताम्, यमराजस्य पत्नीं तावद् वदतम्, क्व द्रष्टव्या सेति।

अयो०—[पुनर्हसन्] हा ··· हा ·· हा ··· क्व तां द्रक्ष्यसि, सा तु महिला-समाजस्य आन्दोलने नेतृत्वं करोति।

महा०—अत्रापि आन्दोलनम्? किमर्थम् तत्?

शङ्कु०—यत् प्रोषित-भर्तृकाणाम् अस्थायि-विवाहस्याधिकारो भवतु इति।

महा०—[सचिन्तम्] तदा तु कदाचित् ममाऽनुपस्थितौ ममापि गृहिणी पुनर्विवाहं कुर्यात्।

[नेपथ्ये]

भो भो अयोमुख-शङ्कुणौ, प्रशासक-महोदय आदेशेनानुग्रहं करोति।

उभौ—[आकाशे] किमादिशति तत्रभवान्?

[पुनर्नेपथ्ये]

यदि कोऽपि वैदेशिको विनाऽनुमतिं प्रविशति यमपुरीम्, स निगृह्य मत्संमुखम् आनेयः।

उभौ—यथादिशति भवान्। [महाशनं प्रति] पुरोहित-महाशय! अनुभूतं त्वया दिव्यान्नपानम्। अधुना निरय-पात-सत्काराय सज्जो भव।



[इति सहासं निगडेन बध्नीतः।]

महा०—[सभयम्] भद्रौ, दयेथां मयि । मुञ्चतं माम् । नाहं पुनरेष्यामि ।

शङ्कु०—कथं नैष्यसि ? पुनः कस्यचन अपरस्यापि विवाहो भविता । कुतस्त्वादृशः पुरोहितो लभ्यते ? [हसति] ।

अयो०—किं मोक्षमिच्छसि ?

महा०—[करौ बद्ध्वा] एष शरणं गच्छामि ।

अयो०—शङ्कुकर्ण ! इतस्तावत् ।

[ शङ्कुकर्ण उपसर्पति । उभौ शनैः किमपि मन्त्रयतः ]

अयो०—[महाशनम् उपगम्य] यद्येवं किमपि उपाहर ।

महा०—[साश्चर्यम् अक्षिणी विस्फार्य पश्यति] किम् अत्रापि उत्कोच-द्रव्यं देयम् ?

शङ्कु०—[दण्डम् उद्यम्य साटोपम्] किं वदसि रे ! आवां किम् उत्कोच-ग्राहिणौ ? अलं तस्य नामापि कीर्तयित्वा ।

महा०—तर्हि कीदृश उपहारः ?

अयो०—अरे, त्वं कीदृशः पुरोहितः ? न जानासि यद् देवोऽपि उपायनम् अपेक्षते ।

महा०—किं पुनर्यमदूत इत्यपि ब्रूहि ।

शङ्कु०—[करेण सङ्केतं नाटयन्] अरे किमपि पायय भोजय ।

महा०—भो निरयवासिनो मृतस्य बन्धुभिर्दत्तं पिण्डादि भुञ्जते, कथं मयाऽत्र दत्तं वाम् उपतिष्ठेत ?

अयो०—कथं तुभ्यं न दीयते केनाऽपि ?

महा०—सज्जौ तिष्ठतम् । मह्यं तु पत्न्या गाली-वृष्टिर्मार्जनी-प्रहारो वा दीयते । [इति हस्तेन अभिनयति] तत्र संविभागः कार्यः ।

शङ्कु०—[सनैराश्यम्] किं गाली-वृष्टिर्मार्जनी-प्रहारश्च ?

महा०—[सस्मितम् अक्षिणी विस्फार्य] अन्यथा त्वया चिन्तितम्, अपूपानि रस-गुलिका वा भोक्ष्यसे ? अरे, मम तु यवागू-बिन्दुरपि दुर्लभम् ।

भवतु, पश्यामि यदि कक्षे स्यात् किमपि । [इति कक्षे हस्तं पातयित्वा काश्चिन् मुद्रा गृह्णन्] भो इमाः कतिपय-मुद्रा एव अस्य दरिद्रस्य पार्श्वे । एता एव पानकाय सन्तु ।

शङ्कु०—[दृष्ट्वा] अरे विमेतेन ? नैषा मुद्राऽत्र प्रामाणिकी ।

अयो०—शङ्कुकर्ण ! विमस्य कदर्यस्य कृते कालातिपातः क्रियते । नयाव एनं प्रभोः सकाशम् ।

शङ्कु०—सुष्ठु भणितम् । अस्य कीनाशस्य प्रभात एव मुख-दर्शनेन अनशनम् एव आवयोर्जातम् । [महाशनं प्रति] चल रे चल अग्रतः ।

महा०—कीदृशो युवयोः पुरोहितं प्रति समुदाचारः ?

अयो०—अलं प्रलप्य । गच्छाग्रतः [उभौ चलतः । शृङ्खलाया उपानहां च शब्दः] ।

महा—[मार्गे इतस्ततो नाम-पट्टानि आंल-भाषायां दृष्ट्वा] भो, किं निमित्तं संस्कृतं प्रत्यादिश्य आङ्ग्ली गीरत्र प्रवर्तिता ?

शङ्कु०—अरे, भुवननगरीयम् । नानालोकेभ्यो जीवात्मानोऽत्र समागच्छन्ति । तैः संभूय आन्दोलनं कृतं यद् अस्माकं भाषैव राज-भाषा भवतु । संस्कृतं तु मृत-भाषा ।

महा०—किन्ते आत्मानं जीवितं मन्यन्ते ?

अयो०—अरे प्रशासकोऽपि आंग्लीमेव जानाति, स्व-सौकर्याय सैव प्रवर्तिता । [पुरतो दृष्ट्वा शनैः] अधुना तूष्णीं भव । [शङ्कुकर्णं प्रति] शङ्कुकर्ण ! गत्वा पश्य, अपि सन्निहितोऽत्रभवान् स्वकक्षे ? अहं तावद् एनं धारयामि ।

शङ्कु०—तथा । [गत्वा क्षिप्रं प्रतिनिवृत्य शनैः] भो घनघटोदरे तरला दीव्यते ।

अयो०—किं तरला ? किं साऽत्र करोति ?

शङ्कु०—[अक्ष्णा महाशनं निर्दिश्य मुखे अंगुलिं निधाय मौनाय संकेतं करोति । सहसा घण्टिका-शब्दः । शङ्कुकर्णोऽन्तर्धावति । पुनरागच्छ ।] अयोमुख, प्रवेशम् अनुजानाति तत्रभवान् ।

अयो०—चल रे, अधुना भोक्ष्यसे परमान्नम् ।

[ त्रय एव परिक्रामन्ति । अन्तः कक्षे प्रविशन्ति । तत आसन्द्याम् आसीनः प्रविशति प्रशासकः । स्निग्ध-कृष्ण-वर्णः, भीषणाकृतिः, पिचण्डिलः, कृष्णं वस्त्र-युगलं वसानः, मुखे धूम्रवर्तिका, एकतः तरला उपविष्टा । ]

महा०—[सविस्मयं विलोक्य] अहो ! भीषणता अस्य । यमम् अपि अतिशेते ।

प्रशा०—[दृष्ट्वा विकृतोच्चारणेन] अयम् कोऽयं कीमर्थम् ईहानीतः … ? क … थं च वे … प … ते ?

अयो०—श्रीमन् ! अयं कश्चिन्महाशननामा, पुरोहितम् आत्मानं वदति । विनानुमतिं पुरीम् इमां प्रविष्ट इत्यानीतः । भयेन च कम्पते ।

प्रशा०—[महाशनं प्रति] पुरो हि त इति उचितां भूमिम् एव अनुप्राप्तः । परं कथं जीवन् प्रविष्टः ?

महा०—अहं धर्मराजस्य कन्यायाः पाणिग्रहणाय समाहूतः ।

प्रशा०—कोऽसौ धर्मराजः ?

महा०—यस्य पदं दूषयता त्वया लोकोऽयं सकलोऽपि दूषितः ।

प्रशा०—आः धृष्टता अस्य वटोः ! यदि पाणि-ग्रहणाय समाहूतः क्व निमन्त्रण-पत्रम् ?

महा०—किं पुरोहितस्य कृतेऽपि निमन्त्रण-पत्रम् अपेक्ष्यते ?

प्रशा०—[सामर्षम्] निर्मर्याद ! शिष्टाचारम् अपि न जानासि ? नियतं नरकं गन्तुम् इच्छसि ।

महा०—[प्रहस्य] नरकं तु पूर्वम् एव प्रविष्टः यत्रागतमात्रस्य क्षुधा मरणं संवृत्तम् ।

प्रशा०—[तरलां दृष्ट्वा] अपि परिचिनोति एनं भवती ?

महा०—[सानाजि तामभिमुखः शनैः] हन्त ! सौदामिनी कालमेघम् एव अनुवर्तते ।



तरला—[सोपेक्षम्] नाऽहं जानामि कोऽयं प्रवञ्चकः । प्रवेश्यतां नरकम् ।

महा०—चित्रं चित्रम् । इयं मां न परिचिनोति । अहं तु अस्या मातरम् अपि जानामि ।

प्रशा०—[सक्रोधम्] आः पामर । क्वेयं क्व च त्वम् ? [क्षणं विचार्य] नियतम् अयं मत्प्रतिपक्षेण प्रेषितः कश्चित् प्रणिधिः ।

तरला—संभवति एतत् ।

प्रशा०—तदा नियतम् अत्र स्थितोऽयं प्रेतेषु मद्विरुद्धं प्रकोपं जनयिष्यति । अतोऽर्धचन्द्रं दत्त्वा यथागतं परावर्तनीयः ।

अयो०—अहो ! महान् अनुग्रहः । यमलोकम् आगतोऽपि प्रतिनिवर्तते । [शङ्कुकर्णं प्रति] शङ्कुकर्ण ! आनय एनम् लालाभक्षादि-दण्डैर्वञ्चितम् अर्धचन्द्र-दानेन सत्कुर्वः ।

[सर्वे परिक्रामन्ति । कक्षाद् बहिरागत्य]

शङ्कु०—[अधः क्षेपणं नाटयन्] पत रे पत । तत्रैव कुर्या विवाह-संस्कारं मरण-संस्कारं वा ।

[इति महाशनः पतन् लक्ष्यते । जवनिका-पातः ।]

## तृतीयं दृश्यम्

[स्थानम्—महाशनस्य गृहम् । महाशनः कक्षे खट्वायां शयानो दृश्यते । प्रभात-कालः । पक्षिणां कलरवः । निकटस्थ-मन्दिरे घण्टा-ध्वनिः । सहसा पादुका-शब्दः । तीव्रगत्या ब्राह्मणी समागच्छति । ]

ब्राह्मणी—[हस्तं स्पृष्ट्वा] किं मृतो जीवति वा ? [उच्चैः क्रोशन्ती] अये, इह खट्वायां स्थितेनैव मुण्डनं क्रियते ? कः कालः सूर्योदयस्य ? अयं तावत् परेतानतिशेते ।

[तस्याः शब्दं श्रुत्वा महाशनो नेत्रे उन्मीलयति । चतुर्दिक्षु शय्यां च दृष्ट्वा दीर्घं निःश्वसन्नुत्तिष्ठति । ]

जवनिका-पातः